न विद्युद्दग्धकृते[1] । न भिन्ने[2] । नोऽग्निप्लुष्टे[3] । न घटासिक्तद्रुमजे[4] । न श्मशान-शून्यालय-देवतायतनेषु । न चपलमध्ये[5] । न नारीमध्ये[6] ।
न धान्य[7]-गो-गुरु-हुताशन-सुराणामुपरि ।
नोच्छिष्टो[8] न दिवा सुप्यात् सन्ध्ययोर्न च भस्मनि ।
देशे न चाऽशुचौ नार्द्रे न च पर्वतमस्तके ' ॥

( वि स्मृ. ७०. १–१७ )

इति । विष्णुपुराणेऽपि—

' नाऽविशालां न वै भग्नां नाऽसमां[9] मलिनां न च ।
न च जन्तुमयीं[10] शय्यामधितिष्ठेदनास्तृताम् ' ॥

( वि. पु. ३. ११. १०८ )

इति । उशनाः—

' न च[11] तैलाभ्यक्तशिराः स्वपेन्नादीक्षितः कृष्णचर्मणि' ।

इति । दक्षः—

---

१. All others except A. and the text omit -कृते and read -दग्धे. २. Except A. and the text all others omit न भिन्ने. ३. In other places the text reads नाग्निप्लुष्टे. ४. All others except A. and the text omit न घटासिक्तद्रुमजे । न श्मशान-शून्यालय-देवतायतनेषु. ५. All others except A. and the text read न बालमध्ये; but the commentator does not follow this reading. ६. B. C. D. and F. read वारिमध्ये; while E. G. H. and I. read न चारिमध्ये. ७. B. C. D. and F. omit धान्य-, and read न गोगेहे । न हुताश-, E. and G. read न धान्ये । न गोगेहे । न हुताश- and H. reads न धान्ये । न गो-गुरु-हुताशन-. All these readings are for न धान्य-गो-गुरु-हुताशन-. ८. B. C. D. E. F. G. and H. omit the latter portion of this verse and read नोच्छिष्टो न दिवा इति; while I. reads नोच्छिष्टे न दिवे इति, but this is a mistake. ९. D. and G. read न समां. १०. E. and G. read न वज्रां भ्रमरीं for न च जन्तुमयीं. ११. Except A. and D. all others omit च.

'प्रदोष-पश्चिमौ यामौ वेदाभ्यासरतो नयेत् ।
यामद्वयं शयानस्तु ब्रह्मभूयाय कल्पते' ॥
(द. स्मृ. २.५४

इति । 'सन्ध्या स्नानम्'—इत्यारभ्य 'यो वेष्टितशिराः' इत्यन्तेन ग्रन्थसन्दर्भेण श्रुत्युपलक्षणाभ्यामाह्निकं संक्षि निरूपितम् । एतस्य करणे श्रेयः अकरणे तु प्रत्यवायः तदुक्तं कूर्मपुराणे—

'इत्येतदखिलं प्रोक्तमहन्यहनि वै मया ।
ब्राह्मणानां कृत्यजातमपवर्गफलप्रदम् ॥
नास्तिक्यादथ वाऽऽलस्याद् ब्राह्मणो न करोति य
स याति नरकान् घोरान् काकयोनौ प्रजायते ॥
नान्यो विमुक्तये पन्था मुक्त्वाऽऽश्रमविधिं स्वकम
तस्मात् कर्माणि कुर्वीत तुष्टये परमेष्ठिनः' ॥
(कू. पु. १. २. १९. ३०–३

इति ॥ ५९ ॥

इत्थं च 'षट्कर्माभिरतः'—इत्यनेन ब्राह्मणस्याऽसाधार धर्मान्निरूप्य तत्रत्याध्ययनादिसाधारणधर्मप्रसङ्गागतमाि परिसमाप्येदानीं प्रकृतानेव क्रमप्राप्तानभिषिक्तस्य क्षत्रियस्याऽसाधारणधर्मानाह—

१. The text of Daksha reads वेदाभ्यासेन तौ. २. The text of Da reads शयानो हि for शयनस्तु. ३. I. reads इत्थं तदखिलं; while the of K. P. reads इत्येतदखिलेनोक्तं. ४. E. and G. read कालयोनौ; B. C. and F. read व्यालयोनौ. ५. B. C. D. E. F. and G. omit च. ६ and I. substitute स्वकर्माभिरत: for षट्कर्माभिरतः. ७. I. reads स्य साध ८. . reads तत्राध्ययनादि. ९. I. reads क्षत्रियस्य साधारण.

अव्रता ह्यनधीयाना यत्र भैक्ष्यचरा द्विजाः ।
तं ग्रामं दण्डयेद्राजा चोर-भक्तप्रदो हि सः ॥ ६० ॥
क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डवान् ।
निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ॥ ६१ ॥
पुष्पं पुष्पं विचिनुयान्मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाऽङ्गारकारकः ॥ ६२ ॥

इति । द्विविधो हि राजधर्मः दुष्टशिक्षा शिष्टपरिपालनं च । तत्राद्येन श्लोकेन दुष्टशिक्षा प्रतिपाद्यते । व्रतशब्देनात्र ब्रह्मचारिकर्तृकं मध्वादिवर्जनमभिप्रेतम् । तथा च याज्ञवल्क्यः 'व्रतमपीडयन्' (या. स्मृ. १. ३) इत्युक्त्वा विवक्षितं तद्व्रतं स्पष्टीचकार—

'मधु-मांसाञ्जनोच्छिष्ट-शुक्त-स्त्री-प्राणिहिंसनम् ।
भास्करालोकनाश्लील-परिवादादि वर्जयेत्' ॥
(या. स्मृ. १. ३३)

इति । यद्वा स्वगृह्यप्रसिद्धानि प्राजापत्यादीनि चत्वार्यत्र [व्र]तशब्दाभिधेयानि । तदुभयविधव्रतरहिताः स्वाध्याय[म]प्यनधीयाना ब्रह्मचारिणो यत्र ग्रामे भैक्ष्यमाचरन्ति तं

---

१. M. reads अनृता. २. M. reads प्रचण्डवत्. ३. M. reads विजित्य. [४]. G. H. I. K. and M. read पालयन्. ५. J. and K. read पुष्पं फलं; [w]hile I. reads पुष्पमात्रं. ६. M. reads इवोद्याने. ७. B. C. and F. read शुल्क-; while G. reads -शुक्र-. ८. All others except A. and the text [o]f Yâjnavalkya read -वारांश्च, but the commentator of the text does [n]ot follow the reading.

ग्रामं दण्डयेत् । यतः स ग्रामश्चौरसदृशेभ्यो भक्तमन्नं प्रयच्छति । अनेन वचनेन विहितमननुतिष्ठतां प्रतिषिद्ध-मनुतिष्ठतां सर्वेषां राज्ञां दण्डनीयत्वमुपलक्ष्यते । अत एव नारदः—

'यो यो वर्णो ऽपहीयेत यो यो उद्रेकमाप्नुयात् ।
तं तं दृष्ट्वा स्वतो मार्गात् प्रच्युतं स्थापयेत्पथि ॥
अशास्त्रोक्तेषु चान्येषु पापयुक्तेषु कर्मसु ।
प्रसमीक्ष्याऽऽत्मना राजा दण्डं दण्ड्येषु पातयेत्' ॥
(ना. स्मृ. १७. ६७)

इति । याज्ञवल्क्यः—

'कुलानि जातीः श्रेणीश्च गणान् जानपदानपि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि' ॥
(या. स्मृ. १. ३६१)

इति । मनुरपि—

'पिताऽऽचार्यः सुहृन्माता भार्या पुत्रः पुरोहितः ।
नाऽदण्ड्यो नाम राज्ञोऽस्ति यस्त्वधर्मेण तिष्ठति' ॥
(म. भा. शां. रा. १२१. ६०

इति । याज्ञवल्क्यो ऽपि—

---

१. I. reads ऽवहीयेत. २. All others except A. and the text of Nârad read यश्चोद्रेकमनुव्रजेत्. ३. I. inserts this verse in the quotation fro Yâjnavalkya, but it is a mistake. ४. D. reads चरितान्, and I. rea चकितान्. ५. B. C. F. and G. read यः स्वधर्मेण while D. omits t following—

..........यस्त्वधर्मेण तिष्ठति' ॥

इति । याज्ञवल्क्योऽपि—

'अपि भ्राता सुतोऽर्घ्यो वा श्वशुरो मातुलोऽपि वा ।
नादण्ड्यो नाम राज्ञोऽस्ति............................ ॥

'अपि भ्राता सुतोऽर्घ्यो[1] वा श्वशुरो मातुलोऽपि वा।
नाऽदण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात्'॥
(या. स्मृ. १. ३५८)

इति। दण्ड्यदण्डनं प्रशंसति याज्ञवल्क्यः—

'यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत्।
इष्टं स्यात् क्रतुभिस्तेन समाप्तवरदक्षिणैः'॥
(या. स्मृ. १. ३५९)

इति। [2]अदण्ड्यदण्डनं निषेधयति मनुः—

'अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकं चैव गच्छति'॥
(म. स्मृ. ८. १२८)

इति। दण्डश्च द्विविधः शारीरो[3]ऽर्थदण्डश्चेति। यथाऽऽह नारदः-

'शारीरश्चार्थदण्डश्च दण्डश्च द्विविधः स्मृतः। (५३)
[4]शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्त्तितः॥ (५४)
[5]काकिण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैव च'॥
(ना. स्मृ. २१. ५३-५५)

इति। राज्ञो दण्डयितृत्वं महता प्रबन्धेन सम्भावयति मनुः—

'अराजके हि लोकेऽस्मिन्[6] सर्वतो विद्रुते भयात्।
रक्षार्थमस्य सर्वस्य राजानमसृजत्प्रभुः॥
इन्द्रा-ऽनिल-यमा-ऽर्काणामग्नेश्च वरुणस्य च।
चन्द्र-वित्तेशयोश्चैव मात्रा निर्हृत्य शाश्वतीः॥

---

१. I. reads भार्या for अर्घ्यो वा. २. G. reads अदण्ड्यान् दण्डयन्तं निषेधति. ३. I. reads शारीर आर्थिकश्चेति, while all others except B. C. and F. omit इति. ४ The text reads—शारीरः सन्निरोधादिर्जीवितान्तस्तथैव च. ५. A. reads कणादिस्त्वर्थदण्डस्तु. ६. A. reads लोकस्य.

यस्मादेषां सुरेन्द्राणां मात्राभ्यो निर्मितो नृपः ।
तस्मादभिभवत्येष सर्वभूतानि तेजसा ॥
तपत्यादित्यवच्चैव चक्षूंषि च मनांसि च ।
न चैनं भुवि शक्नोति कश्चिदप्यभिवीक्षितुम् ॥
सो ऽग्निर्भवति वायुश्च सो ऽर्कः सोमः स धर्मराट् ।
स कुबेरः स वरुणः स महेन्द्रः प्रभावतः ॥
बालो ऽपि नावमन्तव्यो मनुष्य इति भूमिपः ।
महती देवता ह्येषा नररूपेण तिष्ठति ॥
एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशु-द्रव्यसञ्चयम् ॥
कार्य्यं सोऽवेक्ष्य शक्तिं च देश-कालौ च तत्त्वतः ।
कुरुते धर्मसिद्ध्यर्थं विश्वरूपं पुनःपुनः ॥
यस्य प्रसादे पद्माऽऽस्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥
यस्तु तं द्वेष्टि सम्मोहात् स विनश्यत्यसंशयम् ।
तस्य ह्याशु विनाशाय राजा प्रकुरुते मनः ॥
तस्माद्धर्मं यमिष्टेषु स व्यवस्येन्नराधिपः ।
अनिष्टं चाप्यनिष्टेषु तं धर्मं न विचालयेत् ॥

---

१. D. reads चैनं; while A. reads च तं. २. G. reads नरन्तुरुपसर्पिणम्. ३. All others except A. and I. read यस्य प्रसादे पद्मा श्रीः; while G. reads तस्य प्रसादे पद्माऽऽस्ते. ४. The text of Manu reads तं यस्तु. ५. B. C. E. F. H. and I. read तस्माद्धर्ममभीष्टेषु; while G. reads तस्माद्धर्मंपर्यष्टिषु. ६ I. reads सत्यं पश्येत् through mistake. ७. I. reads तद्धर्मं.

तस्यार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत् पूर्वमीश्वरः ॥ (१४)
तं राजा प्रणयन्सम्यक् त्रिवर्गेणाभिवर्द्धते । (२७)
(म. स्मृ. ७. ३-२७)

इति । महाभारते-
'परोक्षा देवताः सर्वा राजा प्रत्यक्षदेवता ।
प्रसादश्च प्रकोपश्च प्रत्यक्षो यस्य दृश्यते ॥
राजा माता पिता चैव राजा कुलवतां कुलम् ।
राजा सत्यं च धर्मश्च राजा हितकरो नृणाम् ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो माभूत् राजा कालस्य कारणम् ॥
राजमूलो महाराज धर्मो लोकस्य लभ्यते ।
प्रजा राजभयादेव न खादन्ति परस्परम्' ॥
(म. भा. शां. रा. ६९. ७९. )

इति । ननु-'दण्डयेद्राजा'-इति भूपालस्यापि दण्डयितृत्वमुक्तम् । तत्कथं क्षत्रियस्याऽसाधारणधर्मः? नैवम् । राजशब्दस्य क्षत्रियविषयत्वेनावेष्ट्यधिकरणे निर्णीतत्वात् । तथा हि-द्वितीयाध्याये अवेष्ट्यधिकरणे श्रूयते-'आग्नेयमष्टाकपालं नैर्ऋतं हिरण्यं दक्षिणा'- इत्यादिना राजकर्तृके राजसूये

---

१. D. reads तस्यांगे. २. All others except A. D. and the text of Manu read धर्ममात्मनः. ३. All others except A. and the text of Manu substitute दण्डं for सम्यक्. ४. G. reads -धर्मतः ५. A. reads त्र. ६. H. reads राजमूलो राजधर्मो. ७. I. reads रक्ष्यते. ८. B. C. D. E. and F. read नन्दन्ति च for न खादन्ति. ९. From तथा हि to (P. 451, L. 17) एवमत्रापि राजशब्दः क्षत्रियपरः (both including) the intermediate portion is omitted by all others except A. and I.

अवेष्टिनामकेष्टिं प्रकृत्य–'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये विधायाहुतिं हुत्वा तमभिघारयेत् । यदि राजन्य ऐन्द्रम् । यदि वैश्यो वैश्वदेवम्'–इति ।

तत्र संशयः । किं ब्राह्मणादीनामवेष्टौ प्राप्तानां वर्णानां राजसूये ऽधिकारः ? उत क्षत्रियस्यैव?–इति । तदर्थं च किं राजशब्दः त्रयाणामपि वर्णानां वाचकः ? किंवा क्षत्रियस्यैव ?–इति । ततोऽपि पुनर्विचारयितव्यम् । किं राजशब्दो राज्ययोगनिमित्तः? क्षत्रियत्वनिमित्तो वा ?–इति । तत्र राजशब्दो राज्ययोगनिमित्त एव । आर्यप्रसिद्धेः । सर्वलोकप्रसिद्धत्वादविगानाच्च । न तु क्षत्रियत्वनिमित्तः । अनार्यप्रसिद्धेरार्यप्रसिद्धापेक्षया दुर्बलत्वात् । द्रविडेषु विगानात् । तदन्येष्वप्रसिद्धश्च । तत्र स्यात् राज्ययोगात् राजानस्त्रयोऽपि भवन्ति । राज्यपदं तु रूढ्या जनपदरक्षणे वर्त्तते । न राजयोगमपेक्षते ।

ननु– 'कर्मणि '– इत्यधिकृत्य–

'पत्यन्तपुरोहितादिभ्यो यक् ' ।

( पा. सू. ५. १. १२८ )

इति वचनात् राजशब्दस्य तत्र पाठादाचाराच्च स्मृतेर्बल[illegible]यस्त्वात् राजयोग एव राज्यपदप्रवृत्तिनिमित्तं–इति चेत् । लो[illegible] प्रयोगस्यैव शब्दार्थावधारणे प्रमाणत्वात् स्मृतेरपि स एव मू[illegible] नान्यत् । प्रयोगाच्च राज्यशब्दस्यैव स्वातन्त्र्यं तन्निमित्त[illegible] च राजशब्दस्यावगम्यते । ततस्तदनुसारेण स्मरणं शब्दापश[illegible]

१. Here I. gives the reading अत्र तस्मात्. २. I. reads पत्यंश- thro[illegible] mistake.

त्रभागमात्रपरं व्याख्येयम्। अतस्त्रयाणामपि राजपदाभिधे-
यत्वेन राजसूये प्राप्तानां निमित्तार्थानि श्रवणानि। 'यदि'
शब्दोऽपि राजशब्दस्य राज्ययोगनिमित्तत्वे प्रमाणम्। अन्य-
था प्राप्त्यभावात् 'यदि' शब्दोऽनुपपन्नः स्यात्। वैदिकश्च
निर्देशः स्मृतेरपि बलीयान्। तस्मात् निमित्तार्थानि श्रवणा-
नि-इति प्राप्ते ब्रूमः।

न तावद्वैदिकनिर्देशादत्र निर्णयः शक्यते। अन्यथाऽपि तत्स-
म्भवात्। 'राजानमभिषेचयेत्'- इति ह्यभिषेकविधौ प्रागे-
व राज्ययोगाद्राजशब्दस्य क्षत्रियमात्र एव प्रयुक्तत्वात्। ते-
न रूढमेव राजपदं निर्णीयते। 'यदि' शब्दस्तु निपातत्वाद्
'यथा कथञ्चिदपि नियमे न दुष्यति'-इति स्मरणाच्च स्वतन्त्र-
मेव राजपदम्। न च तस्य निर्मूलत्वम्। द्रविडप्रयोगस्यैव मू-
लस्य सम्भवात्। अतो न यथार्थत्वे स्मरणस्य प्रमाणमस्तीति।
तेनैवाभियुक्तप्रणीतेनाचारस्य सम्भवात्। गौण-भ्रान्त्या-
दिप्रयोगप्रसृतस्य बाधात् राज्ययोगेन राजशब्दः। स्वतन्त्रस्तु
राजशब्दः क्षत्रियवचन-इति ब्राह्मणादेरवेष्टौ प्राप्त्यभावात्
प्रापकानि वचनानि-इति। एवमत्रापि राजशब्दः क्षत्रियपरः।

ननु-जनरञ्जनाद्राजत्वं महाभारतेऽभिहितम्—

'रञ्जनात् खलु राजत्वं प्रजानां पालनादपि'।

इति। बाढम्। सम्भवत्येवं क्षत्रियस्यापि रञ्जकत्वम्।
'क्षत्रियो हि' इत्यनेन द्वितीयश्लोकेन शिष्टपरिपालनरूपो धर्मो

१. I. reads प्रयुक्तः. २. I. reads नयने. ३. I. gives the correct reading नायथार्थत्वे. ४. B, C. and F. read ननु च- for ननु -जन-. ५. I. omits -परि-.

अभिधीयते[1]। राजधर्मेषु प्रजारक्षणस्य प्राधान्येन विवक्षितत्वात् प्रथमं प्रजारक्षणमित्युक्तम्[2]। अत एव याज्ञवल्क्यः–

'प्रधानं क्षत्रिये कर्म प्रजानां परिपालनम्'[3]।

(या. स्मृ. १. ११९)

इति। मनुरपि तदेवादौ प्रदर्शयति–

'प्रजानां रक्षणं दानमिज्या ऽध्ययनमेव च।
विषयेष्वप्रसक्तिं च[4] क्षत्रियस्य समादिशत्'॥

(म. स्मृ. १. ८९)

इति। शान्तिपर्वण्यपि–

'नृपाणां परमो धर्मः प्रजानामेव[5] पालनम्।
निर्दिष्टफलभोक्ता हि राजा धर्मेण[6] युज्यते॥
वर्णानामाश्रमाणां च राजा भवति पालकः।
स्वे स्वे धर्मे नियुञ्जानः प्रजाः स्वाः पालयेत् सदा॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः।
सम्यक् पालयिता भागं धर्मस्याप्नोति पुष्कलम्॥
यजते यदधीते च यद्ददाति यदर्चति।
राजा षड्भागभाक् तस्य प्रजा धर्मेण पालयन्[7]॥
सर्वाश्चैव प्रजा नित्यं राजा धर्मेण पालयेत्।
उत्थानेन प्रमादेन[8] पूजयेच्चापि धार्मिकान्॥

---

१. A. reads निरूप्यते, and I. विधीयते. २. A. reads प्रजारञ्जनस्य. ३. I. reads प्रधानः क्षत्रियं धर्मः, but all other manuscripts, as well as the text, do not follow this reading. ४. The text of Manu reads अप्रसक्तिश्च. ५. I. reads प्रजानां परिपालनम्. ६. B. C., D. E. and F. read राजधर्मेण for राजा धर्मेण. ७. After this word B. C. D. E. F. G. and H. add इति. ८. D. reads प्रदानेन.

राज्ञा हि पूजितो धर्मस्ततः सर्वत्र पूज्यते।
यद् यदा ऽऽचरते राजा तत् प्रजानां स्म रोचते' ॥

इति। मार्कण्डेयपुराणे–

'वत्स राज्याभिषिक्तेन प्रजारञ्जनमादितः।
कर्त्तव्यमविरोधेन स्वधर्मस्य महीभृता ॥
पालनेनैव भूतानां कृतकृत्यो महीपतिः।
सम्यक् पालयिता भागं धर्मेष्वाप्नोति पुष्कलम्' ॥

(मा. पु. २७. ४–३१.)

इति। ब्रह्माण्डपुराणे–

'यदन्हा कुरुते धर्मं प्रजा धर्मेण पालयन्।
दशवर्षसहस्राणि तस्य भुङ्क्ते महत्फलम्' ॥

(म. भा. शां. रा. ७१. २९)

इति। मनुरपि–

'सर्वतो धर्मषड्भागो राज्ञो भवति रक्षतः।
अधर्मादपि षड्भागो भवत्येव ह्यरक्षतः ॥
रक्षन् धर्मेण भूतानि राजा वध्यांश्च घातयन्।
यजते ऽहरहर्यज्ञैः सहस्र-शतदक्षिणैः ॥
यो ऽरक्षन्बलिमादत्ते करं शुल्कं च पार्थिवः।
प्रीतिं भोगं च दण्डं च स सद्यो नरकं व्रजेत्' ॥

इति। रक्षणीयाश्च प्रजा भयमापन्नाः। भयं च तासां द्वेधा सम्पद्यते। चोर-व्याघ्रादिभ्यः परसैन्येभ्यो वा। अतस्तदुभय-

---

१. I. reads च. २. The text of Mârkandeya Purâṇa reads राज्ये ऽभिषिक्ते च. ३. D. reads महीभृतः. ४. The text reads वत्सतः. ५. B. C. and F. read भागं च.

निवारणाय 'प्रदण्डवान्'–इति 'परसैन्यानि निर्जित्य'–इति चोक्तम्। एतच्च निवारणं क्षत्रियस्यैव कुतो ऽसाधारणमित्याशङ्क्य तद्धेतुत्वेन शस्त्रपाणित्वं वर्णितम्। तच्च क्षत्रियस्यैव। तथा च मनुः–

'शस्त्रास्त्रभृत्त्वं क्षत्रस्य वणिक्-पशु-कृषिर्विशः।
आजीवनार्थं धर्मस्तु दानमध्ययनं यजिः'॥

(म. स्मृ. १०. ७९)

इति। आनुशासनिकेऽपि क्षत्रियं प्रकृत्य पठ्यते–

'उत्साहः शस्त्रपाणित्वं तस्य धर्मः सनातनः'।

इति। शस्त्रपाणित्वेन च युद्धोपकरणानि सर्वाण्युपलक्ष्यन्ते। तानि च शान्तिपर्वणि दर्शितानि–

'यष्टयस्तोमराः खड्गा निशिताश्च परश्वधाः।
फलकान्यथ वर्माणि परिकल्प्यान्यनेकशः'॥

इति। 'प्रदण्डवान्' इत्यनेन चौरादिशिक्षा विवक्षिता। यद्यप्येषा पूर्ववचन एवोक्ता तथापि तत्र सा प्राधान्येन प्रतिपादिता। अत्र तु प्रजारक्षणसाधनत्वेनेति न पौनरुक्त्यम्। दण्डप्रकारमाह मनुः–

'अनुबन्धं परीक्ष्यार्थं देश-कालौ च तत्त्वतः।
सापराधमथालोच्य दण्डं दण्ड्येषु पातयेत्'॥

(म. स्मृ. ८. १२६

इति। विष्णुः–

---

१. From तद्धेतुत्वेन to च युद्धोपकरणानि the intermediate portion omitted by E. We do not think that this omission is a mistake of th writer. २. B. C. D. E. F. G. and H. read -कृषी. ३. I. read अगुः; while D. reads यजुः through mistake. ४. I. omits सा. ५. Th text of Manu reads परिज्ञाय for परीक्ष्यार्थ.

'आगःस्वपि तथाऽन्येषु ज्ञात्वा जातिं धनं वयः।
दण्डं प्रकल्पयेद्राजा संमन्त्र्य ब्राह्मणैः सह' ॥
(वि. स्मृ. ५. १९४)

इति। बृहस्पतिरपि–
'वाग्धिग्वधः स्वकं चैव चतुर्धा कल्पितो दमः।
पुरुषे दोषविभवं ज्ञात्वा सम्परिकल्पयेत् ॥
गुरून् पुरोहितान् विप्रान् वाग्दण्डेनैव दण्डयेत्।
विवादिनो नरांश्चान्यान् दोषिणोऽर्थेन दण्डयेत् ॥
महापराधयुक्तांश्च वधदण्डेन दण्डयेत्'।

इति। तथा च कात्यायनः–
'मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम्।
यथोक्तं तस्य तत्कुर्युरनुक्तं साधुकल्पितम् ॥
अधार्मिकं त्रिभिर्न्यायैर्निगृह्णीयात् प्रयत्नतः।
निरोधनेन बन्धेन विविधेन वधेन च' ॥

इति। मनुः–
'दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत्।
त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम्।
चक्षुर्नासे च कर्णौ च धनं देहस्तथैव च ॥

---

१. B. C. D. and F. read आसेष्वपि for आगःस्वपि. The text of Vishṇu reads अपराधिषु चाऽन्येषु for आगःस्वपि तथाऽन्येषु. २. I. reads दण्डं तु प्रणयेद्राजा. ३. Except A. and the text of Vishṇu all others read सामन्त- for सम्मन्त्र्य. ४. B. C. E. F. and G. omit इति। बृहस्पतिरपि. H. also omits this, but these words appear in the marginal correction. ५. I. omits च. ६. The text of Manu reads यानि. ७. B. C. and F. read पादं.

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
पुरुषाणां कुलीनानां नारीणां च विशेषतः ॥
(म. स्मृ. ८. १२४-१२५)

इति । बृहस्पतिरपि—

'जगत् सर्वमिदं हन्यात् ब्राह्मणस्य न तत्समम् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥
अवध्यान् ब्राह्मणानाहुः सर्वपापेष्ववस्थितान् ।
येष्वद्विप्रेषु कुशलं तत्तद्राजा समाचरेत् ।
राष्ट्रादेनं बहिः कुर्यात् समग्रधनमक्षतम्' ॥

इति । यमोऽपि—

'एवं धर्मप्रवृत्तस्य राज्ञो दण्डधरस्य च ।
यशोऽस्मिन् प्रथते लोके स्वर्गे वासस्तथाऽक्षयः' ॥

इति । परसैन्यनिर्जयस्तु शान्तिपर्वणि दर्शितः—

'चैत्रे वा मार्गशीर्षे वा सेनायोगः प्रशस्यते । (१०)
पक्कसस्या हि पृथिवी भवत्यम्बुमती तदा ॥
नैवातिशीतो नात्युष्णः कालो भवति भारत । (११)
तस्मात्तदा योजयीत परेषां व्यसनेषु वा ॥
एते हि योगाः सेनायाः प्रशस्ताः परबाधने । (१२)
जलवांस्तृणवान्मार्गः समो गम्यः प्रशस्यते ॥
चारैः सुविदिताभ्यासः कुशलैर्वनगोचरैः । (१३)

---

१. यद्यद्धि कुशलं यस्मात् for यद्यद्विप्रेषु कुशलं. २. All others except I. omit यमोऽपि. ३. The text of Mahâbhârata reads चैत्र्यां वा मार्गशीर्ष्यां वा. ४. I. reads तथा. ५. B. C. D. E. F. G. and H. read गच्छति. ६. The text reads तथा योजयेत. ७. H. reads जनवान्.

सप्तर्षीन् पृष्ठतः कृत्वा युद्ध्येयुरचला इव । (१९)
यतो वायुर्यतः सूर्यो यतः शुक्रस्ततो जयः । (२०)
अकर्दमामनुदकाममर्यादामलोष्टकाम् ।
अश्वभूमिं प्रशंसन्ति ये युद्धकुशला जनाः ॥
समा[1] निरुदका चैव रथभूमिः प्रशस्यते ।
नीचद्रुमा महाकक्षा सोदका हस्तियोधिनाम् ॥
बहुदुर्गा महावृक्षा वेणु-वेत्र[2]तिरस्कृता ।
पदातीनां क्षमा भूमिः पर्वतोपवनानि च[3] ॥
पदातिबहुला सेना दृढा भवति भारत ।
रथा[4]ऽश्वबहुला सेना सुदिनेषु प्रशस्यते ॥
पदाति-नागबहुला प्रावृट्काले प्रशस्यते ।
गुणानेतान् प्रसङ्ख्याय युद्धं शत्रुषु योजयेत्[5] ॥
( म. भा. शां. रा. १००. १०-२५)

इति । मनुरपि—

'यदा तु यानमातिष्ठेदरिराष्ट्रम्प्रति प्रभुः ।
तदाऽनेन विधानेन यायादरिपुरं शनैः ॥
मार्गशीर्षे शुभे मासे[6] यायाद्यात्रां महीपतिः ।
फाल्गुनं[7] वाऽथ चैत्रं वा मासौ प्रति यथाबलम् ॥
अन्येष्वपि[8] तु कालेषु यदा पश्येद्ध्रुवं जयम् ।
तदा यायाद्विगृह्यैव व्यसने चोत्थिते रिपोः ॥

---

१. The text reads सपङ्कगर्तरहिता. २. The text reads -समाकुला. ३. B. C. E. F. and H. read सर्वतोपवनानि च; while I. reads सर्वतो न[व]नानि च. ४. I. reads तथाऽश्व-. ५. The text reads देश-कालौ प्रयोजयेत्. ६. The text of Manu reads मासि. ७. B. C. and F. read फाल्गुने वाऽथ चैत्रे वा. ८. I. reads अन्येष्वप्यृतु-.

कृत्वा विधानं मूले तु यात्रिकं च यथाविधि ।
उपगृह्यास्पदं चैव चारान् सम्यग्विधाय च ॥
संशोध्य त्रिविधं मार्गं षड्विधं च स्वकं बलम् ।
साम्परायिककल्पेन यायादरिपुरं शनैः ' ॥
( म. स्मृ. ७. १८१-१८५ )

इति । बलस्य षड्विधता उशनसा दर्शिता—
'मूलबलं श्रेणीबलं मित्रबलं
भृतकंबलं शत्रुबलमाटविकबलं च' ।

इति । युद्धार्थं सैन्यसन्नाहरचनामाह मनुः—
' दण्डव्यूहेन तन्मार्गं यायात्तु शकटेन वा ।
वराह-मकराभ्यां वा सूच्या वा गरुडेन वा ॥
यतश्च भयमाशङ्केत्ततो विस्तारयेद्बलम् ।
पद्मेन चैव व्यूहेन निविशेत तदा स्वयम् ॥
सेनापति-बलाध्यक्षौ सर्वदिक्षु निवेशयेत् ।
यतश्च भयमाशङ्केत्तां प्राचीं कल्पयेद्दिशम् ॥
गुल्मांश्च स्थापयेदाप्तान् कृतसंज्ञान् समन्ततः ।
स्थाने युद्धे च कुशलानभीरूनविकारिणः ॥
संहतान् योधयेदल्पान् कामं विस्तारयेद्बहून् ।
सूच्या वज्रेण चैवैतान् व्यूहेन व्यूह्य योधयेत् ॥

१. B. C. E. F. G. and H. read चारं. २. B. C. E. and F. read महालसादर्शिता for उशनसा दर्शिता. ३. I. reads तथा; while the text reads सदा. ४. I. reads सेनापतीन् बलाध्यक्षान्. ५. B. C. D. E. F. G. and H. read दीप्तान् for आप्तान्. ६. B. C. D. E. F. and G. read स्थानयुद्धे. ७. A. reads विभजेदस्थान्.

स्यन्दनाश्वैः समे युद्ध्येदनूपे नौ-द्विपैस्तथा।
वृक्ष-गुल्मावृते चापैरसि-चर्मायुधैः स्थले॥
कौरुक्षेत्रांश्च मात्स्यांश्च पाञ्चालाञ्छूरसेनजान्।
दीर्घान् लघूंश्चैव नरानग्रानीकेषु योजयेत्॥
प्रहर्षयेद्बलं व्यूह्य तांश्च सम्यक् परीक्षयेत्।
चेष्टाश्चैव विजानीयादरीन् योधयतामपि॥
उपरुद्ध्यारिमासीत राष्ट्रं चास्योपपीडयेत्।
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्॥
भिन्द्याच्चैव तडागानि प्राकार-परिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥
उपजप्यानुपजपेद्बुद्ध्येच्चैव हि तत्कृतम्।
युक्ते च दैवे युद्ध्येत जयप्रेप्सुरपेतभीः॥
साम्ना दानेन भेदेन समस्तैरथ वा पृथक्।

---

१. B. C. E. and F. read—

युद्ध्येरन् स्यन्दनाश्वैश्च समे ऽनूपे च नौ-द्विपैः।,

and D. and G.—

युद्ध्येरन् स्यन्दनाश्वैव समेऽनूपे च नौ द्विपैः।.

२. I. and the text of Manu read कुरुक्षेत्रांश्च मत्स्यांश्च. ३. B. C. D. E. F. and G. omit—

चेष्टाश्चैव विजानीयादरीन् योधयतामपि।.

४. B. C. D. E. F. and G. omit the following three lines—

भिन्द्याच्चैव तडागानि प्राकारपरिखास्तथा।
समवस्कन्दयेच्चैनं रात्रौ वित्रासयेत्तथा॥
उपजप्यानुपजपेद्बुद्ध्येच्चैव हि तत्कृतम्।

H. also omits these lines, but they appear in the marginal correction of the manuscript. ५. I. reads तटाकानि. ६. I. reads अपि for तथा. ७. I. reads उपजाप्या-. ८. The text of Manu reads बुद्ध्येतैव च.

विजेतुं प्रयतेतारीन् न युद्धेन कदाचन ॥
अनित्यो विजयो यस्मात् दृश्यते युद्ध्यमानयोः ।
पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत् ॥
त्रयाणामप्युपायानां पूर्वोक्तानामसम्भवे ।
तथा युद्ध्येत सम्पन्नो विजयेत रिपुं यथा ॥
जित्वा सम्पूजयेद्देवान् ब्राह्मणांश्चैव धार्मिकान् ।
प्रदद्यात् परिहारांश्च ख्यापयेदभयानि च ॥
सर्वेषां तु विदित्वैषां समासेन चिकीर्षितम् ।
स्थापयेत् तत्र तद्वंश्यं कुर्याच्च समयक्रियाम् ॥
प्रमाणानि च कुर्वीत तेषां धर्मान् यथोदितान् ।

(म. स्मृ. ७. १८७–२०३

इति । उक्तप्रकारेण परसैन्यानि निर्जित्य जितामेतां पूर्वां च स्वकीयां भुवं राजधर्मेण पालयेत् । तदेव धर्मेण पालनं 'पुष्पं पुष्पं' (६२)—इति *तृतीयश्लोकेन विशदीक्रियते । यथा मालाकार आरामे यदा यदा यत् यत्पुष्पं विकसति तदा तदा तत्तद्विचिनोति । न तु पुष्पलतामुन्मूलयति । तथा प्रजाभ्य करमाददानो राजा यथोदयं षष्ठं भागं गृह्णीयात् । अंगारका

* तृतीयश्लोकेन पूर्वमुदाहृते मूलस्थश्लोकत्रये अन्त्येन द्विपाठितमेनेति बोध्यम् ।

१. B. C. D. E. F. G. and H. read युद्ध्येत. २. G. reads संक्रामे ३. B. C. E. and G. read सम्पत्तौ; while I. reads संयत्तो. ४. B. C. D. E. F. G. and H. read रिपूंस्तथा; while H. and the text of Manu read रिपून्यथा. ५. B. C. D. E. F. and G. read परिहारार्थं. ६. D. reads पालयेत. ७. The text of Manu reads धर्म्यान्. ८. I. reads पुष्पमात्रं ९. I. reads तद्विचिनोति.

रकस्तु वृक्षमुन्मूल्य सर्वात्मना दहति । न तु तथा प्रजाः पीडयेत् । एतच्च शान्तिपर्वणि दर्शितम्—

'मधुदोहं दुहेद्राष्ट्रं भ्रमरान्न प्रवासयेत् ।
वत्सापेक्षी दुहेच्चैव स्तनांश्चैव न कुट्टयेत् ॥
जलौकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्रीवदुद्धरेत् पुत्रं न दशेन्न च पीडयेत् ॥
यथा च लेखकः पर्णमाखुः पादत्वचं यथा ।
अतीक्ष्णेनाभ्युपायेन तथा राष्ट्रं समापिबन् ॥
अल्पेनाल्पेन देयेन वर्धमानं प्रदापयेत् ।
ततो भूयस्ततो भूयः क्रमाद्वृद्धिं समाचरेत्' ॥

( म. भा. शां. रा. ८८. ४–७ )

इति । मनुरपि—

'क्रय-विक्रयमध्वानं भक्तं च सपरिव्ययम् ।
योग-क्षेमं च सम्प्रेक्ष्य वणिजो दापयेत् करान् ॥
यथा फलेन युज्येत राजा कर्ता च कर्मणाम् ।
यथाऽवेक्ष्य नृपो राष्ट्रे कल्पयेत् सततं करान् ॥

१. The text of Mahâbhârata reads भ्रमर इव पादपम. २. All except A. and the text read न चाभुवन्पीडयेत्. ३. I. reads स्तनांश्चैव विकुट्टयेत् through mistake. ४. A. D. and G. read जलूकावत. ५. B. C. D. F and G. read व्याघ्री चापहरेत्, E. and H. read व्याघ्रींवापहरेत. A. reads व्याघ्रींवशाहरेत् and the text व्याघ्रीव च हरेत. ६. The text reads यथा शल्यकवानाखुः पदं धूनयते सदा ।. ७. Except A. and the text all read अतीक्ष्णेनाभ्युपायेन वर्धमानं प्रदापयेत् omitting तथा राष्ट्रं समापिबन ॥ अल्पेनाल्पेन देयेन. ८. I. reads क्रमाद्वृद्धि. ९. I. reads योगं. १०. D. reads फले च युञ्जीत, and B. C. E. F. and G. read फलेन युञ्जीत.

यथाऽल्पाल्पमदन्त्याद्यं वार्योकोवत्सषट्पदाः ।
तथाऽल्पाल्पो ग्रहीतव्यो राष्ट्राद्राज्ञाऽऽब्दिकः करः' ॥
(म. स्मृ. ७. १२७–१२९; म. भा. शा. ८७. १३)

इति । मार्कण्डेयोऽपि–

'मासानष्टौ यथा सूर्यस्तोयं हरति रश्मिभिः ।
सूक्ष्मेणैवाभ्युपायेन तथा शुल्कादिकं नृपः' ॥
(मा. पु. २७. २३)

इति । एतच्च करादानं मालाकारदृष्टान्तेन प्रतिपादितमितरेषामपि सर्वेषां राजधर्माणामुपलक्षणम् । ते च धर्माः याज्ञवल्क्येन दर्शिताः–

'महोत्साहः स्थूललक्षः कृतज्ञो वृद्धसेवकः ।
विनीतः सत्त्वसम्पन्नः कुलीनः सत्यवाक् शुचिः ॥
अदीर्घसूत्रः स्मृतिमानक्षुद्रोऽपरुषस्तथा ।
धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित् ॥
स्वरन्ध्रगोप्ताऽऽन्वीक्षिक्यां दण्डनीत्यां तथैव च ।
विनीतस्त्वथ वार्त्तायां त्रय्यां चैव नराधिपः' ॥
(या. स्मृ. १. ३०९–३११)

इति । त एतेऽन्तरङ्गा राजधर्माः । एत एव राजगुणा इत्यप्युच्यन्ते । अत एव–

'षट्त्रिंशद्गुणोपेतो राजा'–

---

१. This verse appears in the marginal correction of H. २. D omits मार्कण्डेयोऽपि and the following verse. ३. I. reads अक्षुधं for अक्षुद्रो. ४. I. reads य एते.

इत्यस्य सूत्रस्य व्याख्यानावसरे महोत्साहादयः उशनसा पठिताः । बहिरङ्गा अपि राजधर्मा याज्ञवल्क्येन दर्शिताः—

'सुमन्त्रिणः प्रकुर्वीत प्राज्ञान्मौलान् स्थिरान् शुचीन् ।
तैः सार्द्धं चिन्तयेद्राज्यं विप्रेणाथ ततः स्वयम्' ॥

( या. स्मृ. १. ३१२ )

इति । मनुरपि—

'मौलाञ्छास्त्रविदः शूरान् लब्धलक्ष्यान् कुलोद्गतान् ।
सचिवान् सप्त चाष्टौ वा प्रकुर्वीत परीक्षितान् ॥ (५४)
तैः सार्द्धं चिन्तयेन्नित्यं सामादीन् सन्धि-विग्रहम् ।
स्थानं समुदयं गुप्तिं लब्ध-प्रशमनानि च ॥ (५६)
तेषां स्वं स्वमभिप्रायमुपलभ्य पृथक् पृथक् ।
समस्तानां च कार्येषु विदध्याद्धितमात्मनः ॥
सर्वेषां तु विशिष्टेन ब्राह्मणेन विपश्चिता ।
मन्त्रयेत् परमं मन्त्रं राजा षाड्गुण्यसंयुतम् ॥
नित्यं तस्मिन् समाश्वस्तः सर्वकार्याणि निःक्षिपेत् ।
तेन सार्द्धं विनिश्चित्य ततः कर्म समारभेत्' ॥

( म. स्मृ. ७. ५४–५९ )

इति । आरम्भणीयं च कर्म देशविशेषेषु दुर्गसम्पादनम् । तच्च याज्ञवल्क्येन दर्शितम्—

---

१. All others except A. and I. read सन्मन्त्रिणः and the text of Yâjnavalkya reads स मन्त्रिणः. २. D. reads शास्त्रविदः. ३. G. reads बद्ध-लक्षान्. ४. D. reads कुलागतान्. ५. D. E. H. and I. read -विग्रहान्. ६. I. reads सामान्य-.

'रम्यं पशव्यमाजीव्यं जाङ्गलं देशमावसेत् ।
तत्र दुर्गाणि कुर्वीत जन-कोशात्मगुप्तये' ॥

(या. स्मृ. १. ३२१

इति । दुर्गभेदा मनुना दर्शिताः—

'धन्वदुर्गं महीदुर्गमब्दुर्गं वार्क्षमेव वा ।
नृदुर्गं गिरिदुर्गं च समावृत्य वसेत् पुरम् ॥
सर्वेण तु प्रयत्नेन गिरिदुर्गं समाश्रयेत्' ।

(म. स्मृ. ७. ७०–७१)

इति । दुर्गसंविधानप्रकारः शान्तिपर्वणि दर्शितः—

'दृढप्राकार-परिखं हस्त्यश्व-रथसङ्कुलम् ।
ऊर्जस्विनर-नागाश्वं चत्वरापणशोभितम् ॥
प्रसिद्धव्यवहारं च प्रशान्तमकुतोभयम् ।
शूराढ्यं प्राज्ञसम्पूर्णं ब्रह्मघोषानुनादितम् ॥
समाजोत्सवसम्पन्नं सदा पूजितदैवतम् ।
वश्यामात्य-बलो राजा तत्पुरं स्वयमाविशेत्' ॥

(म. भा. शां. रा. ८६. ६–७)

इति । मनुरपि—

---

१. I. reads यशस्यम for पशव्यम. २. D. reads दुर्गभेदो मनुना दर्शित and omits the following four lines, up to शान्तिपर्वणि दर्शितः. ३. The tex धनुर्दुर्गं. The text समाश्रित्य. ४. The text reads शूराढ्यजनसम्पन्नं. Here except A. D. and the text of Mahâbhârata all others are mistaken. They omit the following portion—

.................. ब्रह्मघोषानुनादितम् ॥
समाजोत्सवसम्पन्नं सदा पूजितदैवतम् ।
वश्यामात्यबलो राजा.................. ॥

and read शूराढ्यं प्राज्ञसम्पूर्णं तत्पुरं स्वयमाविशेत्.

'तत्स्यादायुधसम्पन्नं धन-धान्येन वाहनैः।
ब्राह्मणैः शिल्पिभिर्यन्त्रैर्यवसेनोदकेन्धनैः॥
तस्य मध्ये तु पर्याप्तं कारयेद्गृहमात्मनः।
गुप्तं सर्वर्तुकं शुभ्रं जल-वृक्षसमन्वितम्'॥
(म. स्मृ. ७. ७५–७६)

इति। दुर्गसंविधानमुक्त्वा यागादिधर्मानपि स एवाह—

'तदध्यास्योद्वहेद्भार्यां सवर्णां लक्षणान्विताम्।
कुले महति सम्भूतां हृद्यां रूपसमन्विताम्॥
पुरोहितं च कुर्वीत वृणुयादेव चर्त्विजः।
तस्य गृह्याणि कर्माणि कुर्युर्वैतानिकानि च॥
यजेत राजा क्रतुभिर्विविधैराप्तदक्षिणैः।
यज्ञार्थं चैव विप्रेभ्यो दद्याद्भोगान् धनानि च॥
सांवत्सरिकमाप्तैश्च राष्ट्रादाहारयेद्बलिम्।
स्याच्चाम्नायपरो लोके वर्तेत पितृवन्नृषु'॥
(म. स्मृ. ७. ७७–८०)

इति। याज्ञवल्क्योऽपि—

'पुरोहितं प्रकुर्वीत दैवज्ञमुदितोदितम्।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा॥

---

१. The text of Manu reads तं स्यात्. २. The text reads सु- for तु. ३. All except I. and the text read सार्वर्तुकं. ४. I. reads शुद्धं. ५. The text reads -गुणान्विताम्. ६. I. and the text read चर्त्विजम्. ७. All others except A. I. and the text read तस्य. ८. The text reads धर्मार्थं. ९. B. C. E. F. and G. omit this whole line. १०. All except A. and the text read पुरोहितं च कुर्वीत. ११. I. reads दैवज्ञमपि चाधिकम्, and G. omits the following portion:—

श्रौत-स्मार्त्तक्रियाहेतोर्वृणुयादेव चर्त्विजः ।
यज्ञांश्चैव प्रकुर्वीत विधिवद्भूरिदक्षिणान् ॥
भोगांश्च दद्याद्विप्रेभ्यो वसूनि विविधानि च ।
सदान-मान-सत्कारैर्वासयेत् श्रोत्रियान् सदा ' ॥
(या. स्मृ. १. ३१३-३१५)

इति । मनुरपि—
' म्रियमाणोऽप्याददीत न राजा श्रोत्रियात् करम् ।
न च क्षुधाऽस्य संसीदेत् श्रोत्रियो विषये वसन् ॥
यस्य राज्ञस्तु विषये श्रोत्रियः सीदति क्षुधा ।
तस्यापि तत् क्षुधा राष्ट्रमचिरादेव सीदति ॥
श्रुत-वृत्ते विदित्वास्य वृत्तिं धर्म्यां प्रकल्पयेत् ।
संरक्षेत् सर्वतश्चैनं पिता पुत्रमिवौरसम् ' ॥
(म. स्मृ. ७. १३३-१३५)

इति । आनुशासनिकेऽपि—
'शाला-प्रपा-तडागानि देवताऽऽयतनानि च ।
ब्राह्मणावसथांश्चैव कर्त्तव्यं नृपसत्तमैः ॥

---

.................. दैवज्ञमुदितोदितम ।
दण्डनीत्यां च कुशलमथर्वाङ्गिरसे तथा ॥
श्रौत-स्मार्तक्रियाहेतोर्वृणुयादेव चर्त्विज ।
यज्ञांश्चैव प्रकुर्वीत.......................... ॥

and reads पुरोहितं च कुर्वीत विधिवद्भूरिदक्षिणम् ॥. १. B. C. E. F. and G. read प्रदान-मान-; while D. reads सदाऽन्न-मान-, but this whole line is not found in the text, which substitutes—

अक्षयोऽयं निधी राज्ञां यद्विप्रेषूपपादितम् ॥

for it. २. The text reads अध्वरेण्वेव. ३. B. C. D. E. F. and G. read सर्वतश्चैव. ४. D. reads -प्रपात-शाकानि. ५. B. C. D. E. F. H. and I. read आवसथं

ब्राह्मणा नावमन्तव्या भस्मच्छन्ना इवाग्नयः।
कुलमुत्पाटयेयुस्ते क्रोधाविष्टा द्विजातयः॥
दुष्टानां शासनं धर्मः शिष्टानां परिपालनम्।
कर्त्तव्यं भूमिपालेन नित्यं कार्येषु चार्जवम्' ॥

इति। शान्तिपर्वण्यपि—

'बालातुरेषु भूतेषु परित्राणं कुरूद्वह।
शरणागतेषु कारुण्यं कुर्यात्तत्र समाहितः॥
भरणं सर्वभूतानां रक्षणं चापि सर्वशः।
यष्टव्यं क्रतुभिर्नित्यं दातव्यं चाप्यपीडया॥
प्रजानां रक्षणं कार्यं न कार्यं कर्म गर्हितम्।
आश्रमेषु यथाकालं चैलं भाजनभाजनम्॥
स्वयं तूपहरेद्राजा सत्कृत्य विधिपूर्वकम्।
आत्मानं सर्वकार्याणि तापसे राज्यमेव च॥
निवेदयेत् प्रयत्नेन तिष्ठेत् प्रह्वश्च नित्यशः।
विक्रमेण महीं लब्ध्वा प्रजा धर्मेण पालयन्॥
आहवे निधनं कुर्याद्राजा धर्मपरायणः।
आहवे च महीं लब्ध्वा श्रोत्रियायोपपादयेत्' ॥

(म. भा. शां. रा. ८६.२१–२६)

इति। मनुः—

---

१. This and the following two lines do not appear in our edition of Mahâbhârata Ś. (Canto 86); but they may be found elsewhere in this book. २. The text reads धर्मबाधकम. ३. The text reads सत्कृत्याऽभ्यर्च्य मान्य च. ४. The text reads राष्ट्र-. ५. The text reads सर्वदा. ६. D. reads व्युत्क्रमेण. This and the following two lines are not found in the 86th Canto of Mahâbhârata S. ७. D. omits इति। मनुः–.

'मोहाद्राजा स्वराष्ट्रं यः कर्षयत्यनवेक्षया ।
सोऽचिराद्भ्रश्यते राज्याज्जीविताच्च सबान्धवः ॥
शरीरकर्षणात् प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्षणात्' ॥

(म. स्मृ. ७. १११-११

इति । दिनचर्या तु मनुना दर्शिता—

'उत्थाय पश्चिमे यामे कृतशौचः समाहितः ।
हुत्वाऽग्निं ब्राह्मणांश्चार्च्य प्रविशेच्च सभां शुभाम्' ।

(म. स्मृ. ७. १४

इति । स्मृत्यन्तरेऽपि—

'प्रातरुत्थाय नृपतिः कुर्याद्दन्तस्य धावनम् ।
स्नानशालां समागत्य स्नात्वा पूतेन वारिणा ॥
अर्घ्यं दत्वा तु देवाय भास्कराय समाहितः ।
ततोऽलङ्कृतगात्रः सन् वक्त्रमालोक्य मन्त्रवत् ॥
घृतपात्रं तु विप्राय दद्यात् सकनकं नृपः' ।

इति । याज्ञवल्क्योऽपि—

'ऋत्विक्-पुरोहिताचार्यैं राशीर्भिरभिनन्दितः । (३३२
दृष्ट्वा ज्योतिर्विदो वैद्यान् दद्याद्गाः काञ्चनं महीम् ।
नैवेशिकानि च ततः श्रोत्रियेभ्यो गृहाणि च' ॥

(या. स्मृ. १. ३३२-३३३

---

१. The text of Manu reads हुत्वाग्निं ब्राह्मणांश्चार्च्य प्रविशेत्स शुभां सभाम्
२. B. C. D. E. F. and G. substitute स for तु. ३. I. reads मन्त्रवि
४. D. and the text reads दद्याद्गां. ५. B. C. and F. read तथा श्रोत्रियाय
while D. E. G. H. and I. read तथा श्रोत्रियाणां.

इति । नैवेशिकानि विवाहोपयोगीनि कन्याऽलङ्कारादीनि ।

नानन्तरकृत्यं मनुराह—

'तत्र स्थितः प्रजाः सर्वाः प्रतिनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वा मन्त्रयेत् सह मन्त्रिभिः ॥ (१४६)
गिरिपृष्ठं समारुह्य प्रासादं वा रहोगतः ।
अरण्ये निःशलाके वा मन्त्रयेताऽविभावितः ॥ (१४७)
मध्यन्दिनेऽर्द्धरात्रे वा विश्रान्तो विगतक्लमः ।
चिन्तयेत् धर्मकामार्थान् सार्धं तैरेक एव वा ॥(१५१)
कन्यानां सम्प्रदानं च कुमाराणां च रक्षणम् ॥(१५२)
दूतसम्प्रेषणं चैव कार्यशेषं तथैव च ।
अन्तःपुरप्रचारं च प्रणिधीनां च चेष्टितम् ॥ (१५३)
कृत्स्नं चाष्टविधं कर्म पञ्चवर्गं च तत्त्वतः ।
अनुरागापरागौ च प्रचारं मण्डलस्य च ॥ (१५४)
अनन्तरमरिं विद्यादरिसेविनमेव च ।
अरेरनन्तरं मित्रमुदासीनं तयोः परम् ॥ (१५८)
तान् सर्वानभिसन्दध्यात् सामादिभिरुपक्रमैः ।
व्यस्तैश्चैव समस्तैश्च पौरुषेण नयेन च ॥ (१५९)
सन्धिं च विग्रहं चैव यानमासनमेव च ।
द्वैधीभावं संश्रयं च षड्गुणांश्चिन्तयेत्सदा ॥ (१६०)

---

१. H. reads स्थिताः. २. The text of Manu reads मंत्रयेदविभावितः. ३. All others except A. and the text substitute च for वा. ४. B. C. D. E. F. and G. read -प्रसारं च; while I. reads -प्रजानां च. ५. B. C. E. F. G. and I. omit this line. ६. B. C. E. F. and G. omit this and the following three lines.

आसनं चैव यानं च सन्धिं विग्रहमेव च[1] ।
कार्यं वीक्ष्य प्रयुञ्जीत द्वैधं संश्रयमेव च ॥ (१६१)
उपेतारमुपेयं[2] च सर्वोपायांश्च कृत्स्नशः ।
एतत्त्रयं समाश्रित्य प्रयतेतार्थसिद्धये ' ॥ (२१५)
(म. स्मृ. ७. १४६-२१५)

इति । अष्टविधत्वं[3] तु कर्मण उशनसा प्रदर्शितम्—

'आदाने च विसर्गे च तथा प्रैष-निषेधयोः ।
पञ्चमे चार्थवचने व्यवहारस्य चेक्षणे ॥
दण्ड-शुद्ध्योः समायुक्तस्तेनाष्टगतिको नृपः' ।

इति । शुद्धिः प्रायश्चित्तम् । पञ्चवर्गस्तु कार्पटिक[4]-दाम्भि-

---

१. B. C. E. F. G. and H. read सन्धाय च विगृह्य च for सन्धिं विग्रहमेव च; while D. adds the following verses:—

सन्धिं तु द्विविधं विद्याद्राजा विग्रहमेव च ।
उभे यानाऽऽसने चैव द्वैधं संश्रयमेव च ॥
समानयानकर्मा च विपरीतस्तथैव च ।
तदा त्वायतिसंयुक्तः सन्धिर्ज्ञेयो द्विलक्षणः ॥
स्वयंकृतश्च कार्यार्थमकाले काल एव वा ।
मित्रस्य चैवापकृते द्विविधो विग्रहः स्मृतः ॥
एकाकिनःस्यात्ययिके कार्ये प्राप्ते यदृच्छया ।
संहतस्य च मित्रेण द्विविधं यानमुच्यते ॥
क्षीणस्य चैव क्रमशो दैवात्पूर्वकृतेन वा ।
मित्रस्य चाऽनुरोधेन द्विविधं स्मृतमासनम् ॥
बलस्य स्वामिनश्चैव स्थितिः कार्यार्थसिद्धये ।
द्विविधं कीर्त्यते द्वैधं षाड्गुण्यगुणवेदिभिः ॥
अर्थसम्पादनार्थाय पीड्यमानस्य शत्रुभिः ।
साधुषु व्यपदेशेषु द्विविधः संश्रयः स्मृतः ॥
(म. स्मृ. ७. १६२-१६८)

All these verses are found in the text of Manu with slight changes in reading. २. B reads उपायं च. ३. B. C. D. E. F. and G. omit the portion from अष्टविधत्वं तु to कार्यसिद्धिरिति वा पञ्चवर्गः (P. 471, L. 3). ४. I. reads कार्पटिक-.

क-गृहपति-वैदेहक-तापसव्यञ्जनाश्चराः । कर्मणामारम्भोपायः, पुरुष-द्रव्यसम्पत्, विनिपातप्रतीकारः, कार्यसिद्धिरिति वा पञ्चवर्गः।

'एवं सर्वमिदं राजा सह सम्मन्त्र्य मन्त्रिभिः ।
व्यायम्याऽऽप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत् ॥
तत्रात्मभूतैः कालज्ञैरहार्यैः परिचारकैः ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥
विषघ्नैरगदैश्चाऽस्य सर्वद्रव्याणि योजयेत् ।
विषघ्नानि च रत्नानि नियतो धारयेत्सदा ॥
परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः ।
वेषाभरणसंशुद्धाः स्पृशेयुः सुसमाहिताः ॥
एवं प्रयत्नं कुर्वीत यान-शय्या-ऽऽसना-ऽशने ।
स्नाने प्रसाधने चैव सर्वालङ्कारकेषु च ॥
भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ।
विहृत्य तु यथाकालं पुनः कार्याणि चिन्तयेत् ॥
अलङ्कृतश्च सम्पश्येदायुधीयं पुनर्जनम् ।
वाहनानि च सर्वाणि शस्त्राण्याभरणानि च ॥
सन्ध्यां चोपास्य शृणुयादन्तर्वेश्मनि शस्त्रभृत् ।
रहस्याख्यायिनां चैव प्रणिधीनां च चेष्टितम् ॥

१. H. reads व्यञ्जका-. २. From शुद्धिः प्रायश्चित्तम (P. 471, L. 10) to this A. omits the intermediate portion. ३. The text of Manu reads विशेत ४. B. C. E. F. G. and H. read रक्षार्थैः. ५. D. reads उदकैश्चैव, and B. C. E. F. G. read उदकैश्चास्य. ६. B. C. E. F. G. H. and I. read वेषाभरणसंयुक्ताः संस्पृशेयुः for वेषाभरणसंशुद्धाः स्पृशेयुः सु-; while D. substitutes विषाभरण- for वेषाभरण-. ७. All except A. and the text read च यथाकामं.

गत्वा कक्षाऽन्तरं सम्यक् समनुज्ञाप्य तं जनम् ।
प्रविशेद्भोजनार्थं तु स्त्रीवृतोऽन्तःपुरं पुनः ॥
तत्र भुक्त्वा पुनः किञ्चित्तूर्यघोषैः प्रहर्षितः ।
संविशेच्च यथाकालमुत्तिष्ठेच्च गतक्लमः ॥
एतद्विधानमातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतत् भृत्येषु विनिवेशयेत्' ॥
(म. स्मृ. ७. २१६-२२६)

इति । धर्मान्तरमाह मनुः–

'सङ्ग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् ।
शुश्रूषा ब्राह्मणानां च राज्ञां श्रेयस्करं परम् ॥(८८)
अलब्धं चैव लिप्सेत लब्धं रक्षेच्च यत्नतः ।
रक्षितं वर्द्धयेच्चैव वृद्धं पात्रेषु निःक्षिपेत् ॥ (९९)
अमाययैव वर्त्तेत न कथञ्चन मायया ।
बुद्ध्येतारिप्रयुक्तां तु मायां नित्यं सुसंवृतः॥ (१०४)
(म. स्मृ. ७. ८८-१०४

इति । शान्तिपर्वण्यपि–

'व्यसनानि च सर्वाणि नृपतिः परिवर्जयेत् ।
लोकसङ्ग्रहणार्थाय कृतकव्यसनी भवेत्' ॥

इति । तानि व्यसनानि मनुना दर्शितानि–

---

१. The text of Manu reads स्वन्यत्; while D. reads यावत. २. All others, except A. I. and the text, read स्त्रीभिरन्तःपुरं. ३. The text of Manu reads तु for च. ४. All except A. I. and the text of Manu read विगतक्लम. for च गतक्लमः. ५. All except A. I. and the text read एतद्विन्नं समातिष्ठेत. ६. The text of Manu reads सर्वमेतत्तु भृत्येषु विनियोजयेत. ७. H. and I. read राज्ञः. ८. The text reads च for तु. ९. The text substitutes स्वसंवृत for सुसंवृतः.

'दश कामसमुत्थानि तथाऽष्टौ क्रोधजानि च। (४५)
मृगयाऽक्षा दिवा स्वप्नः परीवादः स्त्रियो मदः।
तौर्यत्रिकं वृथा ऽटाट्या कामजो दशको गणः॥ (४७)
पैशुन्यं साहसं द्रोह ईर्ष्या ऽसूयार्थदूषणम्।
वाग्दण्डजं च पारुष्यं क्रोधजो ऽपि गणोऽष्टकः॥(४८)
कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः।
वियुज्यते ऽर्थ-धर्माभ्यां क्रोधजे स्वात्मनैव तु॥ (४६)
द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः।
तं यत्नेन जयेल्लोभं तज्जौ ह्येतौ गणावुभौ॥ (४९)
पानमक्षाः स्त्रियश्चैव मृगया च यथाक्रमम्।
एतत्कष्टतमं विद्याच्चतुष्कं कामजे गणे॥ (५०)
दण्डस्य पातनं चैव वाक्पारुष्या-ऽर्थदूषणे।
क्रोधजेऽपि गणे विद्यात् कष्टमेतत्त्रिकं सदा॥ (५१)
व्यसनस्य च मृत्योश्च व्यसनं कष्टमुच्यते।
व्यसन्यधो हि व्रजति स्वर्यात्यव्यसनी मृतः'॥ (५३)
(म. स्मृ. ७. ४५–५३)

इति। मार्कण्डेयो ऽपि–

---

१ I. reads ऽश्रो. २. All others except A. I. and the text read स्मः. [illegible] मद. ३. B. C. E. F. read वृथाऽट्याट्या, G. reads वृथा भाषा. I. वृथा[illegible]ट्या and the text reads वृथा ऽटया च. ४. All except A. H. I. [illegible]d the text read द्रोहं. ५. D. reads वाग्दण्डो दण्डपारुष्यं ६. D. [illegible]d G. read गुणोऽष्टकः. ७. B. C. and F. read वियुज्येतार्थ-कामाभ्यां; while [illegible] E. G. and H. read वियुज्यते ऽर्थ-कामाभ्यां. ८. I. reads क्रोधजे स्वात्म[illegible] तु; while D. reads क्रोधजेऽप्यात्मजेन तु. ९. I. reads स्वजेल्लोभं स्वा[illegible]यौ ह्येतौ, and the text reads जयेल्लोभं तज्जावेतौ. १०. B. C. F. read [illegible]नं मत्ता, D. reads पानमाचाः; while G. reads पानमत्ता. All are probably incorrect. ११. The text reads अधो ऽधो व्रजति.

'व्यसनानि परित्यज्य सप्त मूलहराणि चै[1] ।
आत्मा रिपुभ्यः संरक्ष्यो[2] बहिर्मन्त्रविनिर्गमात् ॥ (८)
स्थान-वृद्धि-क्षय-ज्ञान-षाड्गुण्यविजितात्मना[3] ।
भवितव्यं नरेन्द्रेण न कामवशवर्त्तिना ॥ (९)
प्रागात्मा मन्त्रिणश्चैव ततो भृत्या महीभृता ।
जेया[4]श्चानन्तरं पौरा विरुद्धयेत ततोऽरिभिः ॥ (१०)
यस्त्वेतानविनिर्जित्य[5] वैरिणो विजिगीषते ।
सोऽजितात्माऽजितामात्यः शत्रुवर्गेण बाध्यते' ॥ (११)

(मा. पु. २७. ८-११)

इति । तदेवमुक्तधर्मकलापेन संयुक्तो राजा प्रजाः पालयेत् । तदुक्तं मनुना—

'एवं सर्वं विधायेदमितिकर्त्तव्यमात्मनः ।
युक्तश्चैवाऽप्रमत्तश्च परिरक्षेदिमाः प्रजाः' ॥

(म. स्मृ. ७. १४१)

इति । प्रजारक्षणे राज्ञः श्रेयोविशेष ऐहिक आमुष्मिकश्च शान्तिपर्वणि दर्शितः—

'स्त्रियश्चाऽपुरुषा[6] मार्गं सर्वालङ्कारभूषिताः ।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः ॥
धर्ममेव प्रपन्द्यन्ते न हिंसन्ति परस्परम् ।
अनुगृह्णन्ति[7] चान्योन्यं यदा रक्षति भूमिपः ॥

---

१. The text substitutes चै for च. २. D. reads संरक्षन्. ३. The text reads -ज्ञनषाड्गुण्यगुणिनाऽत्मना. ४. Our reading follows A. and the text of Mârkaṇḍeya, but all others read ज्ञेयाः. ५. B. C. and F. read -न्यविनिर्जित्य; while the text reads -न विजित्यैव. ६. All except A. and the text read स्त्रियश्च पुरुषा. ७. I. reads अनुयुञ्जयन्ति through mistake and corrects अनुरुन्धयन्ति.

यजन्ते च महायज्ञैस्त्रयो वर्णाः पृथग्विधैः।
युक्ताश्चाधीयते वेदान् यदा रक्षति भूमिपः॥
यदा राजा धुरं श्रेष्ठामादाय वहति प्रजाः।
महता बलयोगेन तदा लोकः प्रसीदति'॥
(म. भा. शां. रा. ६८. ३२-३६)

इति। रामायणेऽपि-
'यः क्षत्रियः स्वधर्मेण पृथिवीमनुशास्ति वै।
स लोके लभते वीरं यशः प्रेत्येह चैव हि'॥
इति। अपालने दोषः शान्तिपर्वणि दर्शितः-
'यानं वस्त्राण्यलङ्कारान् रत्नानि विविधानि च।
हरेयुः सहसा पापा यदि राजा न पालयेत्॥
पतेद्बहुविधं शस्त्रं बहुधा धर्मचारिषु।
अधर्मः प्रगृहीतः स्यात् यदि राजा न पालयेत्'॥
(म. भा. शां. रा. ६८. १६-१७)

इति।

## ॥ इति राजधर्मप्रकरणम् ॥

---

१. The text reads विद्यां. २. Except A. and the text all others read this verse as follows :—

यदा राजा ऽऽधुरं श्रेष्ठमादाय वहति प्रजा।
महता बलयोगेन तदा लोकान् समश्नुते॥.

३. I. reads वीर्यं for वीरं. ४. H. and I. read प्रेत्य च सद्गतिम्. ५. Except A. and the text (Calcutta edition of the text reads पतद्बहुविधं शास्त्रं) all others read this verse as follows :—

एतद्बहुविधं शास्त्रं न कृषिर्न वणिक्पथः।
मज्जेत् धर्मस्त्रयी न स्यात् यदि राजा न पालयेत्॥;

while I. reads पतेद्बहुविधं शास्त्रं.

अथ वैश्यधर्मप्रकरणम् । क्रमप्राप्तान् वैश्यस्याऽसाधारणधर्मानाह—

लोभकर्म[1] तथा रत्नं[2] गवां च परिपालनम् ।
कृषिकर्म च वाणिज्यं वैश्यवृत्तिरुदाहृता॥ ६२ ॥

लाभार्थं कर्म लाभकर्म कुसीदाद्युपजीवनमित्यर्थः[3] । रत्नं मणि-मुक्तादि । तेन च तत्परीक्षण-क्रय-विक्रया उपलक्ष्यन्ते । गवां पालनं तृणोदकप्रदान-बन्धन-मोचन-दोहनादि । कृषिकर्म भूमिकर्षण-बीजवापनादि । वाणिज्यं क्रमुक-धान्यादि-[4]क्रय-विक्रयौ । कुसीदादीनां वैश्यधर्मत्वमाह याज्ञवल्क्यः—

'कुसीद-कृषि-वाणिज्यं[5] पाशुपाल्यं विशः स्मृतम्' ।
(या. स्मृ. १. ११९)

इति । मनुरपि—

'पशूनां रक्षणं दानमिज्या ऽध्ययनमेव च ।
वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च'॥
(म. स्मृ. १. ९०)

इति । समादिशदिति शेषः । वराहपुराणे ऽपि[6]—

'स्वाध्यायं यजनं दानं कुसीद-पशुपालनम् ।
गोरक्षां कृषि-वाणिज्यं कुर्याद्वैश्यो यथाविधि'॥

इति । पशुपालनं अजाश्वादिपालनम् । गोशब्दस्य पृथगुपात्तत्वात् । आनुशासनिके विक्रेयद्रव्याण्यपि निदर्शितानि—

१. M. reads लोहकर्म, and L. reads लाभकार- for लाभकर्म. The former seems to be more correct. २. K. and L. read रत्न-गवां. ३. All others except A. and I. read कुसीदवृद्ध्युपजीवनम्. ४. I. reads क्रयिक- for क्रमुक- through mistake. ५. The text reads -वाणिज्य-. ६. All except A. and D. omit अपि, and read निर्दिष्टानि for निदर्शितानि.

'तिल-चर्म-रसाश्चैव विक्रेयाः पशु-वाजिनः।
वणिक्पथमुपासीनैर्वैश्यैर्वैश्यपथि स्थितैः'॥
(म. भा. आ. १४१. ६६)

इति। शान्तिपर्वणि [२]जाजल्युपाख्यानप्रसङ्गेन वैश्यध-
[३]र्मास्तुलाधारेणोदिताः—

[४]यद्ददामि न तत्न्यूनं यद्गृह्णामि न चाधिकम्।
[५]विक्रीणामि रसांश्चाहं मद्यवर्ज्यममायया॥
[६]क्रीत्वा चैव प्रविक्रीणे परस्तात्तद्धनं बहु।
(म. भा. शां. मो. २६१.७-८)

इति। पशुपालने विशेषमाहतुः शङ्ख-लिखितौ—
'गा रक्षेत्। तास्वपीतासु न पिबेत्। न तिष्ठत्सू-
पविशेत्। न स्वयमुत्थापयेत्। शनैरार्द्रशा-
खया सपलाशया पृष्ठतोऽभिहन्यात्। न तीर्थे
न विषमे नाल्पोदके ऽवतारयेत्। बाल-वृद्ध-रो-
गार्तानां शक्तितः प्रतीकारं कुर्यात्। अन्यथा
विप्लवः'।

---

१. H. reads पशवस्तथा. २. I. reads जाबाल्युपाख्यान-, but neither the other manuscripts nor the text follows Jâbali. ३. From तुलाधारेणोदिताः to लाभकर्मादीनि (P. 478, L. 1) the intermediate portion is omitted by I., but this is a mistake. ४. This line is not found in the text. ५. The text reads this verse as follows :—

रसांश्च तांस्तान् विमर्दे मद्यवर्ज्यान् बहूनहम्।
क्रीत्वा वै प्रतिविक्रीणे परहस्तादमायया॥.

६. D. reads—

क्रीत्वा वै प्रतिविक्रीणे परहस्ताद्धनं बहु।,

G. reads—

क्रीत्वा चैव प्रविक्रीणे परस्ताद्धनवाहिभिः।;

while H. reads—

क्रीत्वा चैवं प्रविक्रीणे परतस्तद्धनं बहु।.

इति । यानि लाभकर्मादीनि वाणिज्यान्तानि तानि सर्वाणि वैश्यवृत्तिः वैश्यस्य जीवनहेतुरित्यर्थः । तदुक्तं मार्कण्डेये-

'दानमध्ययनं यज्ञो वैश्यस्यापि त्रिधैव सः ।
वाणिज्यं पाशुपाल्यं च कृषिश्चैवास्य जीविका '॥
(मा. पु. २८.६)

इति । अर्थविज्ञानादयोऽपि वैश्यधर्मत्वेन द्रष्टव्याः । अत एव मनुना वैश्यधर्मेषु पठिताः-

'वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम् ।
वार्त्तायां नित्ययुक्तः स्यात् पशूनां चैव रक्षणे ॥ (३२६)
प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून् । (३२७)
न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति ॥
वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन । (३२८)
मणि-मुक्ता-प्रवालानां लोहानां तान्तवस्य च ॥
गन्धानां च रसानां च विद्यादर्घबलाबलम् । (३२९)
बीजानामुप्तिविच्च स्यात् क्षेत्रदोष-गुणस्य च ॥
मानयोगांश्च जानीयात्तुलायोगांश्च सर्वतः । (३३०
सारासारं च भाण्डानां देशानां च गुणागुणान् ।
लाभालाभं च पण्यानां पशूनां चैव विवर्धनम् ॥ (३३१

१. D. reads मार्कण्डेयेन. २. D. reads सा. ३. All others except ... and I. read अर्थ- for अर्घ-. ४. ऽपि is omitted by all except A. ५. Th... and the following two lines appear in Mahâbhârata Śântipar... Râjadharma, Canto 60. ६. I. reads लौहानां. ७. All others except ... and I. read -र्थ-. ८. B. C. F.E.D. and G. read क्षेत्र-बीज-गुण... while H. reads क्षेत्रवृद्धि-गुणस्य. ९. The text reads -योगं च for -योगां... and सर्वशः for सर्वतः. १०. All others except A. and the text r... गुणागुणम्. ११. The text reads पशूनां परिवर्धनम्.

भृत्यानां च भृतिं विद्याद्भाषाश्च विविधा नृणाम्।
द्रव्याणां स्थानयोगांश्च क्रयं विक्रयमेव च ॥ (३३२)
धर्मेण च द्रव्यवृद्धावातिष्ठेद्यत्नमुत्तमम्।
दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः' ॥ (३३३)

(म. स्मृ. ९. ३२९–३३३)

इति। कृषि-वाणिज्य-गोरक्षाः वार्त्ताशब्देनोच्यन्ते। मानयोगा अञ्जलि-प्रस्थादिसाध्याः। मूलवचने 'लाभकर्म'–इत्यत्र 'लौहकर्म'–इति केचित् पठन्ति। लौहस्य सुवर्णरजतादेरर्घपरिज्ञानक्रयादिकं तत्कर्मेति व्याख्येयम्। लौहानां चेति मनुपठितत्वात्। यथोक्तधर्मानुष्ठाने फलमाश्वमेधिके वर्णितम्–

'वणिग्धर्ममनुष्ठन् वै देव-ब्राह्मणपूजकः।
स वणिक् स्वर्गमाप्नोति पूज्यमानोऽप्सरोगणैः' ॥

इति। वैपरीत्ये दोषः शान्तिपर्वणि दर्शितः–

'यः करोति जनान् साधून् वणिक्कर्मणि वञ्चितान्।
स याति नरकं घोरं धनं तस्यापि क्षीयते' ॥

इति ॥ ६३ ॥

## ॥ इति वैश्यधर्मप्रकरणम् ॥

क्रमप्राप्तान् शूद्रस्याऽसाधारणधर्मानाह–

---

१. B. C. F. G. and H. read भाषां च विविधां. २. B. C. D. E. F. G. and H. read द्रव्यवृद्धौ. ३. B. C. E. F. G. and H. read वणिक् कर्मणि वञ्चनम्; while I. reads वणिक्कर्मणि वञ्चनम्.

शूद्रस्य द्विजशुश्रूषा परमो धर्म उच्यते ।
अन्यथा कुरुते किञ्चित्तद्भवेत्तस्य निष्फलम् ॥६४॥

अत्र द्विजशब्दो ब्राह्मणपरः । तच्छुश्रूषायाः परमत्वम् । निःश्रेयसहेतुत्वात् । तदाह मनुः—

'विप्राणां वेदविदुषां गृहस्थानां यशस्विनाम् ।
शुश्रूषैव तु शूद्रस्य धर्मो नैश्रेयसः परः ॥
शुचिरुत्कृष्टशुश्रूषुर्मृदुवागनहंकृतः ।
ब्राह्मणोपाश्रयो नित्यमुत्कृष्टां जातिमश्नुते' ॥
(म. स्मृ. ९. ३३४–३३५)

इति । विष्णुपुराणेऽपि—

'द्विजशुश्रूषयैवैष पाकयज्ञाधिकारवान् ।
निजान् जयति वै लोकान् शूद्रो धन्यतरः स्मृतः' ॥

इति । आनुशासनिकेऽपि—

'रागो द्वेषश्च मोहश्च पारुष्यं च नृशंसता । (७)
शाठ्यं च दीर्घवैरत्वमतिमानमनार्जवम् ॥
अनृतं चानिवादं च पैशुन्यमतिलोभता । (८)
निकृतिश्चाप्यविज्ञानं जनने शूद्रमाविशत् ॥ (१०)
दृष्ट्वा पितामहः शूद्रमभिभूतं तु तामसैः ।
द्विजशुश्रूषणं धर्मं शूद्राणां च प्रयुक्तवान् ॥ (११)

---

१. K. L. and M. read this line as follows:—
शूद्राणां द्विजशुश्रूषा परधर्मः प्रकीर्त्तितः ।
२. I. reads मृदुःशान्तोऽनहंकृतः. ३. The texf reads ब्राह्मणाद्याश्रयो; while B. C. D. E. F. G. and H. read ब्राह्मणापाश्रयो. ४. विष्णुपुराणेऽपि and the following verse is omitted by D. This verse is not found in the text of Vishṇu Purâṇa. ९. I. reads चातिवादश्च.

नश्यन्ति तामसा भावाः शूद्रस्य द्विजभक्तितः। (१२)
द्विजशुश्रूषया शूद्रः परं श्रेयोऽधिगच्छति' ॥ (६)
(वृ. गौ. स्मृ. २१. ६-१२)

इति। 'परम्'— इति विशेषणादन्येऽपि केचन धर्माः सन्तीति गम्यते। ते च देवलेन दर्शिताः—

'शूद्रधर्मास्त्रिवर्णशुश्रूषा कलत्रादिपोषणं कर्षण-पशुपालन-भारोद्वहन-पण्यव्यवहार-चित्रकर्म-नृत्य-गीत-वेणु-वीणा-मुरज-मृदङ्गवादनानि'।

इति। विष्णुपुराणेऽपि—

'दानं च दद्याच्छूद्रोऽपि पाकयज्ञैर्यजेत च[1]।
पित्र्यादिकं च वै सर्वं शूद्रः कुर्वीत तेन वै' ॥
(वि. पु. ३. ८. ३३)

इति। याज्ञवल्क्योऽपि—

'भार्यारतेः[2] शुचिर्भृत्यभर्त्ता श्राद्धक्रियापरः।
नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्' ॥
(या. स्मृ. १. १२१)

इति। शान्तिपर्वण्यपि—

'स्वाहाकार-नमस्कारमन्त्राः[3] शूद्रे विधीयते। (३९)
ताभ्यां शूद्रः पाकयज्ञैर्यजेताव्रतवान्[4] स्वयम् ॥ (३७)

---

१. The text reads वा for च. २. The text reads -रतिः. ३. The text reads स्वाहाकार-वषट्कारौ मन्त्राः शूद्रे न विद्यते; while I. substitutes मन्त्रं for मन्त्राः. ४. B. C. D. E. F. G. and H. read -न व्रतवान्स्वयम; while I. reads -न ब्राह्मणान् स्वयम्.

सञ्चयांश्च न कुर्वीत जातु शूद्रः कथञ्चन । (२८)
सेवया हि धनं लब्ध्वा वशे कुर्याद्गरीयसः ॥
राज्ञा वा समनुज्ञातः कामं कुर्वीत धार्मिकः'[1] । (२९)
(म. भा. शां. रा. ६०. २८-३७)

इति । आनुशासनिकेऽपि—
'अहिंसकः शुभाचारो देवता-द्विजपूजकः ।
शूद्रो धर्मफलैरिष्टैः स्वधर्मेणैव युज्यते' ॥
(म. भा. आ. १४१. ६१)

इति । न केवलं विप्रशुश्रूषा निःश्रेयसार्था अपि तु व
त्त्यर्थाऽपि । अत एव तस्य[2] प्रकल्प्यमाना वृत्तिर्मनुना दर्शिता
'प्रकल्प्या तस्य तैर्वृत्तिः[3] स्वकुटुम्बाद्यथार्हतः ।
शक्तिं चावेक्ष्य दाक्ष्यं[4] च भृत्यानां च परिग्रहम् ॥
उच्छिष्टमन्नं दातव्यं जीर्णानि वसनानि च ।
पुलकाश्चैव धान्यानां जीर्णाश्चैव परिच्छदाः'[5] ॥
(म. स्मृ. १०. १२४-१२५)

इति । शान्तिपर्वण्यपि—
'यश्च कश्चिद्द्विजातीनां शूद्रः शुश्रूषुराव्रजेत् ।
प्रकल्प्या तस्य तैर्वृत्तिमाहुर्धर्मविदो जनाः ॥ (३३)
छत्रं[6] वेष्टनमौशीरमुपानद्व्यजनानि च ।
यातयामानि देयानि शूद्राय परिचारिणे' ॥ (३४)
(म. भा. शां. रा. ६०. ३१-३३)

१. I. reads राज्ञा वानमनुज्ञातः for राज्ञा वा समनुज्ञातः. २. I. omits तस्य. ३. B. C. D. E. F. and I. read वै वृत्तिः. ४. B. C. D. E. F. and G. read भक्तिं for दाक्ष्यं. ५. Except A. all other manuscripts as well as t text are mistaken here. ६. I. reads छत्र-वेष्टनमुपानाणि; while B. C. a F. substitute श्वेतं for छत्रम्-.

इति । अन्यथा द्विजशुश्रूषामन्तरेण यदि किञ्चित् पाकयज्ञादिकं कुर्यात् तत्सर्वं निष्फलं भवेत् । तदुक्तं मनुना–

'विप्रसेवैव शूद्रस्य विशिष्टं कर्म कथ्यते[१] ।
यदतो ऽन्यद्धि कुरुते तद्भवेत्तस्य[२] निष्फलम्' ॥

( म. स्मृ. १०. १२३ )

इति । तस्मात् द्विजशुश्रूषैव तस्य परमो धर्मः । क्षत्रियवैश्यशुश्रूषा तु केवलवृत्त्यर्थत्वादपरमो धर्मः । अत एव मनुना विप्रशुश्रूषाया उभयार्थत्वमितरशुश्रूषायाः केवलवृत्त्यर्थत्वं च[३] दर्शितम्–

'शूद्रस्तु वृत्तिमाकाङ्क्षन् क्षत्रमाराधयेद्यदि ।
धनिनं वाऽप्युपाराध्य वैश्यं शूद्रो जिजीविषेत् ॥
स्वर्गार्थमुभयार्थं वा[४] विप्रानाराधयेत्तु सः ।
जातब्राह्मणशब्दस्य सा ह्यस्य कृतकृत्यता'[५] ॥

( म. स्मृ. १०. १२१-१२२ )

इति ॥ ६४ ॥

---

१. The text reads कीर्त्यते. २. The text reads तद्भवत्यस्य. ३. Except A. and I. all others omit च. ४. I. reads वै for वा, and B. C. D. E. F. read ब्राह्मणानेव धारयेत् for विप्रानाराधयेत्तु सः, for the same G. and H. read ब्राह्मणानेव राधयेत्. ५. A. reads this whole line as follows:—

जातब्राह्मणशब्दस्य न ह्यस्य कृतकृत्यता ।,

For the same G. reads जातिब्राह्मणकृत्यस्य etc., H. जातिब्राह्मणशब्दः स्यात् etc. and in the marginal correction appears -कृत्यः for -शब्दः, B. C. E. and F. read—

जातब्राह्मणकृत्यस्य सार्थस्य कृतकृत्यता.

E. corrects the marginal reading and स्वार्थस्य appears for सा ह्यस्य. D reads—

जातब्राह्मणवृत्तस्य सार्थस्य कृतकृत्यता.

यदा द्विजशुश्रूषया जीवितुं न शक्नोति तदा किं कुर्यादित्यत आह—

लवणं मधु तैलं च दधि तक्रं घृतं पयः ।
न दुष्येच्छूद्रजातीनां कुर्यात्सर्वेषु[1] विक्रयम् ॥ ६५ ॥

शुश्रूषया जीवितुमशक्तो जीवनाय लवणादिषु सर्वेषु विक्रयं कुर्यात् । ननु—लवणादीनि विक्रीयमाणानि विक्रेतुर्दोषमावहन्ति । तदाह याज्ञवल्क्यः—

'फलोपल-क्षौम-सोम-मनुष्यापूप-वीरुधः ।
तिलौदन[2]-रस-क्षारान् दधि क्षीरं घृतं जलम् ॥
शस्त्रासव[3]-मधूच्छिष्ट-मधु-लाक्षाः[4] सबर्हिषः[5] ।
मृच्चर्म-पुष्प-कुतुप[6]-केश-तक्र-विष-क्षितीः ॥
कौशेय-नीलि[7]-लवण-मांसैकशफ-सीसकान् ।
शाकार्द्रौषधि-पिण्याक-पशु-गन्धांस्तथैव[8] च ॥
वैश्यवृत्त्याऽपि जीवन्नो विक्रीणीत कदाचन ।
लाक्षा-लवण-मांसानि पतनीयानि[9] विक्रये ॥
पयोदधि[10] च मद्यं च हीनवर्णकराणि च[11] ।

( या. स्मृ. ३. ३६–४० )

---

१. M, reads सर्वस्य. २ All others except A. I. and the text read तिलोदन-. ३. B. C. E. F. G. and H. read रसासव-; while I. reads वसारस- for शस्त्रासव-. ४. I. reads लाक्षा. ५. The text substitutes च for स-. ६. All others except A. and the text read -कुतप-. ७. I. reads -नील- for -नीलि-. ८. B. C. E. and F. read अम्बु-गन्धान् for -पशु-गन्धान्. ९. I. reads वर्जनीयानि. १०. This line does not appear anywhere except in A. I. and the text. ११. The text substitutes तु for च.

इति जातूकर्ण्यवचनात्। तदयुक्तम्।

'एकोद्दिष्टं तु कर्त्तव्यमौरसेन मृते ऽहनि।
सपिण्डीकरणादूर्ध्वं माता-पित्रोस्तु पार्वणम्' ॥

इति पैठीनसिवचनविरोधात्। जातूकर्ण्यवचनं तु क्षयाह-व्यतिरिक्तप्रत्यब्दकर्त्तव्याक्षय्यतृतीयादिविषयत्वेनाप्युपपद्यते। यत्तु सुमन्तुनोक्तम्-

'कुर्याच्च विधिवच्छ्राद्धं पार्वणं योऽग्निमान् द्विजः।
पित्रोरनग्निमान् धीर एकोद्दिष्टं मृते ऽहनि' ॥

इति तदयुक्तम्।

'ब्रह्मग्रयस्तु ये विप्रा ये चैकाग्नय एव च।
तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्' ॥

इति स्मृत्यन्तरे साग्निकस्याप्येकोद्दिष्टविधानात्। ए-कोद्दिष्टलक्षणमाह याज्ञवल्क्यः-

'एकोद्दिष्टं देवहीनमेकार्घ्यैकपवित्रकम्।
आवाहनाग्नौकरणरहितं ह्यपसव्यवत् ॥
उपतिष्ठतामित्यक्षय्यस्थाने विप्रविसर्जने।
अभिरम्यतामिति वदेद् ब्रूयुस्तेऽभिरताः स्म ह' ॥
(या. स्मृ. १. २५१-५२)

इति। कात्यायनो ऽपि-

'अथैकोद्दिष्टमेकं पात्रमेकोऽर्घ्य एकः पिण्डः
नाऽऽवाहनं नाऽग्नौकरणं नाऽत्र विश्वेदेवाः

---

१. B. C. and F. substitute तु for च. २. The text omits इति. ३. D. G. and I. read विसर्जनम् for विसर्जने.

स्वदितमिति तृप्तिप्रश्नः सुस्वदितमित्यं-
नुज्ञानमुपतिष्ठतामित्यक्षय्यस्थानेऽभिरम्य-
तामिति विसर्गे अभिरताः स्मेत्यपरे'।

इति। तच्चैकोद्दिष्टं त्रिविधम् नवं नवमिश्रं पुराणं चेति। अत्र प्रथमाद्यैकादशाहान्तविहितं नवश्राद्धम्। तथा चाङ्गिराः—

'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥

इति। वसिष्ठोऽपि—

'सप्तमेऽह्नि तृतीयेऽह्नि प्रथमे नवमे तथा।
एकादशे पञ्चमे स्युर्नवश्राद्धानि षट् तथा ॥
केचित्तत्रैव नवमं भवेदन्तरितं यदि।
एकादशेऽह्नि तत् कुर्यादिति स्मृतिकृतो विदुः' ॥

इति। अत्र पक्षद्वयस्य व्यवस्था शिवस्वामिना दर्शिता

'नवश्राद्धानि पञ्चाहुराश्वलायनशाखिनः।
आपस्तम्बाः षडित्याहुर्विभाषा नैत्तिरीयिणाम्' ॥

इति। वेद्यादीनां विशेषो भविष्यत्पुराणे दर्शितः—

'नव सप्त विशां राज्ञां नवश्राद्धान्यनुक्रमात्।
आद्यन्तयोर्वर्णयोस्तु षडित्याहुर्मनीषिणः' ॥

१ B. C. E. F. and G. read अनुज्ञा for अनुज्ञानं. २ B. ... reads अथ for अत्र. ३. D. substitutes च for अह्नि, and E. G. ...

'प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमेऽपि वा।
नवमैकादशे चैव तन्नवश्राद्धमुच्यते' ॥

इति। वसिष्ठोऽपि,

and thus shows the next quotation to be from Vasishṭha. ४ B. C. and F. read तैत्तिरीयिण and I. मैत्रायणीयानाम् for तैत्तिरीयिणाम्.

इति। षण्णां नवश्राद्धानामुपरि कर्त्तव्यं मासिकं नवमिश्रम्। तथा चाऽश्वलायनः[1]—

'नवमिश्रं षडुत्तरम्'।

इति। मासिकानामुपरि कर्त्तव्यं प्रत्याब्दिकादि पुराणम्। अत एव हारीतेन प्रायश्चित्तकाण्डे क्रमेण नवमासिकयोः प्रायश्चित्तमभिधायोत्तरकालीनं श्राद्धं पुराणशब्देन व्यवहृत्य प्रायश्चित्तं विहितम्—

'चान्द्रायणं नवश्राद्धे प्राजापत्यं तु मासिके।
एकाहस्तु पुराणेषु प्रायश्चित्तं विधीयते'॥

(हा. स्मृ. २१. १७)

इति॥

## अथ सपिण्डीकरणम्।

इत्थं पार्वणैकोद्दिष्टे अभिहिते। अथोभयात्मकं सपिण्डीकरणमुच्यते। तत्र लौगाक्षिः—

'श्राद्धानि षोडशापाद्य विदधीत सपिण्डनम्'।

इति। षोडश श्राद्धानि जातूकर्ण्येन दर्शितानि—

'द्वादश प्रतिमास्यानि आद्य-षाण्मासिके तथा।
त्रैपक्षिका-ऽऽब्दिके चेति[2] श्राद्धान्येतानि षोडश'॥

इति। अत्राद्य-षाण्मासिका-ऽऽब्दिकशब्दाः ऊनमासिकोनषाण्मासिकोनाब्दिकपराः। द्वादशमासिकानां कालो याज्ञवल्क्येन दर्शितः—

---

१. H. reads आश्वलायनः. २. G. reads चैव for चेति

'मृते ऽहनि तु कर्तव्यं प्रतिमासं तु वत्सरम् ।
प्रतिसंवत्सरं चैवमाद्यमेकादशे ऽहनि' ॥
( या. स्मृ. १. २५६ )

इति । वत्सरं वत्सरपर्यन्तं मासि मासि मृते ऽहनि श्राद्धं कर्तव्यम् । सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं मृते ऽहनि कर्तव्यम् । आद्यं तु मासिकमेकादशे ऽहनि कर्तव्यम् । ऊनषाण्मासिकादीनां कालमाह गालवः—

'ऊनषाण्मासिकं षष्ठे मासार्धे ह्यूनमासिकम् ।
त्रैपक्षिकं त्रिपक्षे स्यादूनाब्दं द्वादशे तथा' ॥

इति । श्लोकगौतमो ऽपि

'एक-द्वि-त्रिदिनैरूने त्रिभागेनोन एव वा ।
श्राद्धान्यूनाब्दिकादीनि कुर्यादित्याह गौतमः' ॥
( श्लो. गौ. स्मृ. ३. २७ )

इति । ऊनमासिकस्य कालविकल्पमाह गोभिलः—

'मरणाद् द्वादशाहे स्यान्मास्यूने वोनमासिकम्'[1] ।

इति । ऊनानां वर्ज्यं कालमाह गार्ग्यः—

'नन्दायां भार्गवदिने चतुर्दश्यां त्रिपुष्करे ।
ऊनश्राद्धं न कुर्वीत गृही पुत्र-धनक्षयात्' ॥

इति । मरीचिरपि—

'द्विपुष्करे च नन्दासु सिनीवाल्यां भृगोर्दिने ।
चतुर्दश्यां च नोनानि कृत्तिकासु त्रिपुष्करे' ॥

इति । तिथि-वार-नक्षत्रविशेषाणां त्रयाणां मेलनं त्रिपुष्करम् ।

---

१. All, except A. and I. read मासे ऽर्धे न्यूनमासिकम्

द्वयोर्मेलनं द्विपुष्करम्। के ते[1] विशेषाः? द्वितीया-सप्तमी-द्वादश्यो भद्रातिथयः, भानु-भौम-शनैश्चरवाराः, पुनर्वसूत्तराफल्गुनी-विशाखोत्तराषाढा-पूर्वाभाद्रपदानक्षत्राणि।

एवमेतानि षोडश श्राद्धानि कृत्वा ततः सपिण्डनं विदधीत। तस्य कालमाहात्रिः—

'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे द्वादशाहे वा'।

इति। कात्यायनोऽपि—

'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे त्रिपक्षे वा यदहर्वा वृद्धिरापद्यते'।

इति। बौधायनोऽपि—

'अथ संवत्सरे पूर्णे सपिण्डीकरणं त्रिपक्षे वा तृतीये मासि षष्ठे वैकादशे वा द्वादशाहे वा'।

इति। एकादशाह-द्वादशाह-तृतीयपक्ष-तृतीयमास-षष्ठमासैकादशमास-संवत्सरान्त-शुभागमाः—इत्यष्टौ कालाः प्रकीर्तिताः। तत्र व्यवस्थामाह हारीतः—

'या तु पूर्वममावास्या मृताहाद्दशमी भवेत्।
सपिण्डीकरणं तस्यां कुर्यादेव सुतोऽग्निमान्'॥

(हा. स्मृ. २०. ११)

इति। मृताहादूर्ध्वदिनमारभ्येत्यर्थः। कार्ष्णाजिनिरपि—

---

१. B. C. and F. omit के ते विशेषा. २. E. omits the following —
-भौमशनैश्चरवाराः, पुनर्वसूत्तराफल्गुनी-विशाखोत्तराषाढा-पूर्वाभाद्रपदानक्षत्राणि। एवमेतानि षोडश श्राद्धानि कृत्वा तत सपिण्ड-.

३ Except A. and H. all omit this:—
'अथ सपिण्डीकरणम्। संवत्सरे पूर्णे द्वादशाहे वा'।
इति। कात्यायनोऽपि and thus show that the next quotation belongs to Atri. D. has mixed up the present quotation with the preceding one of Kâtyâyana.

'सपिण्डीकरणं कुर्यात् पूर्ववत्साग्निमान् सुतः ।
परतो दशरात्राच्चेत् कुहूरब्दोपरीतरे' ॥

इति । आहिताग्निनाऽमावास्यायां पिण्डपितृयज्ञस्यावश्य-कर्त्तव्यत्वात् सपिण्डीकरणमन्तरेण तदसम्भवाच्चैकादशेऽह्नि दर्शागमे सपिण्डीकरणं कार्यम् । पिण्डपितृयज्ञकर्त्तव्यता तु श्रूयते—

'अमावास्यामपराह्णे पिण्डपितृयज्ञेन चरन्ति'।

इति । सपिण्डीकरणात् पूर्वं पिण्डपितृयज्ञस्याऽसम्भवो गालवेन दर्शितः—

'सपिण्डीकरणादूर्ध्वं पैतृकं पदमास्थिते ।
आहिताग्नेः सिनीवाल्यां पितृयज्ञः प्रवर्त्तते' ॥

इति । दर्शानागमे तु साग्निर्द्वादशेऽह्नि सपिण्डनं कुर्यात् । तदुक्तं भविष्यत्पुराणे—

'यजमानोऽग्निमान् राजन् प्रेतश्चाऽनग्निमान् भवेत् ।
द्वादशाहे भवेत् कार्यं सपिण्डीकरणं सुतैः' ॥

इति । गोभिलोऽपि—

'साग्निकस्तु यदा कर्त्ता प्रेतश्चाऽनग्निमान् भवेत् ।
द्वादशाहे तदा कार्यं सपिण्डीकरणं सुतैः' ॥

इति । प्रेतस्य साग्नित्वे तृतीयपक्षे सपिण्डीकरणं कार्यम् । तदाह सुमन्तुः—

'प्रेतश्चेदाहिताग्निः स्यात् कर्त्ताऽनग्निर्यदा भवेत् ।
सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके' ॥

---

१. I. reads इतर: and G. स्थित: for इतरे. २. B. C. and F. omit तु.
३. H. reads भविष्यपुराणे.

इति। उभयोः साग्निकत्वे द्वादशेऽह्नि सपिण्डीकरणं कार्यम्—

'साग्निकस्तु यदा कर्त्ता प्रेतो वाऽप्यग्निमान् भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः' ॥

इति। उभयोरनग्नित्वे द्वादशाहादयः सप्त काला इच्छया विकल्प्यन्ते। तदुक्तं भविष्यत्पुराणे—

'सपिण्डीकरणं कुर्यात् यजमानस्त्वनग्निमान्।
अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ ॥
द्वादशेऽहनि षष्ठे वा त्रिपक्षे वा त्रिमासिके।
एकादशेऽपि वा मासि मङ्गलं स्यादुपस्थितम्' ॥

इति। एतेषु सप्तसु कालेषु द्वादशाहः प्रशस्तः। तदाह व्याघ्रः—

'आनन्त्यात्कुलधर्माणां पुंसां चैवायुषः क्षयात्।
अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते' ॥

इति। एतत्सर्वं त्रैवर्णिकविषयम्। शूद्रस्य तु द्वादशाह एव प्रतिनियतः। अत एव सपिण्डीकरणं कर्त्तव्यमित्यनुवृत्तौ विष्णुः—

'मन्त्रवर्जं हि शूद्राणां द्वादशेऽहनि कीर्त्तितम्'।

इति। यदा संवत्सरपूर्त्तेः प्रागेवैकादशाहादिषु षोडशश्राद्धानि कृत्वा सपिण्डीकरणं क्रियते तदा पुनरपि स्वस्वकाले मासिकादीन्यावर्त्तनीयानि। तदाह गोभिलः—

---

१. D. omits the following:—
द्वादशाहे सपिण्डीकरणं कार्यम्—
'साग्निकस्तु यदा कर्ता प्रेतो वाऽप्यग्निमान् भवेत्।
द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः' ॥

'यस्य संवत्सरादर्वाग्विहिता तु सपिण्डता ।
विधिवत्तानि कुर्वीत पुनः श्राद्धानि षोडश' ॥

इति । विधिवदिति यथायोगमेकोद्दिष्टेन पार्वणेन वा विधिनेत्यर्थः । तदाह पैठीनसिः—

'सपिण्डीकरणादर्वाक्कुर्याच्छ्राद्धानि षोडश ।
एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु ॥
सपिण्डीकरणादूर्ध्वं यदा कुर्यात्तदा पुनः ।
प्रत्यब्दं यो यथा कुर्यात् तथा कुर्यात्सदा पुनः' ॥

इति । आवर्तनं चोर्ध्वभाविनामेव नाधोभाविनाम् । तदाह कार्ष्णाजिनिः—

'अर्वागब्दाद्यत्र यत्र सपिण्डीकरणं कृतम् ।
तदूर्ध्वं मासिकानां स्याद्यथाकालमनुष्ठितिः' ॥

इति । सपिण्डीकरणादूर्ध्वमावर्तनीयानामनुमासिकादीनां वृद्धिप्राप्तौ पुनरपकर्षः कर्तव्यः । तदाह शाट्यायनिः—

'सपिण्डीकरणादर्वागपकृष्य कृतान्यपि ।
पुनरप्यपकृष्यन्ते वृद्ध्युत्तरनिषेधनात्' ॥

इति । निषेधश्च कात्यायनेनोक्तः—

'निर्वर्त्य वृद्धितन्त्रं तु मासिकानि न तन्त्रयेत्' ।

इति । सपिण्डीकरणस्य गौणकालमाह ऋष्यशृङ्गः—

'सपिण्डीकरणश्राद्धमुक्तकाले न चेत् कृतम् ।
तैष्ये हस्ते च रोहिण्यां मैत्रभे वा समाचरेत्' ॥

इति । सपिण्डीकरणानन्तरकर्तव्यतामाह याज्ञवल्क्यः—

१. G. omits कर्तव्य and reads शाकटायनिः for शाट्यायनिः, and for the same D. reads कात्यायनिः.

'गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम्।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्॥
ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत्'।
(या. स्मृ. १. २५३–२५४)

इति। कात्यायनोऽपि–

'ततः संवत्सरे पूर्णे चत्वारि पात्राणि
सतिल-गन्धोदकैः पूरयित्वा त्रीणि
पितॄणाम्। एकं प्रेतस्य। प्रेतपात्रं
पितृपात्रेष्वासिञ्चति। ये समाना
इति द्वाभ्याम्। एतेन पिण्डो व्याख्यातः'।

इति। यदा पिता म्रियते पितामहस्तिष्ठति तदा प्रपितामहादिभिः सह पितुः सापिण्ड्यम्। तदुक्तं ब्रह्माण्डपुराणे–

'मृते पितरि यस्याथ विद्यते च पितामहः।
तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः'॥

इति। केचित्त्वत्र सापिण्ड्यमेव नाभ्युपगच्छन्ति।

'व्युत्क्रमाच्च प्रमीतानां नैव कार्या सपिण्डता'।

इति वचनात्। अपरे पुनरस्य वचनस्य मातृ-पितृ-भर्तृव्यतिरिक्तविषयत्वं मन्यन्ते। उदाहरन्ति च स्कन्दपुराणवचनम्–

'व्युत्क्रमेण मृतानां च सपिण्डीकृतिरिष्यते।
यदि माता यदि पिता भर्त्ता चैष विधिः स्मृतः'॥

१. D. and the text read प्रसिञ्चयेत् for प्रसेचयेत. २. B. C. F. and G. substitute अथ for च; while D. E. and H read विद्यते प्रपितामहः for विद्यते च पितामहः, but the reading is meaningless. ३. B. C. D. E. F. and G. read अक्रमेण for व्युत्क्रमेण. ४. D. reads नैव and E. G H. and I. नैष for चैष.

इति । अत्र वृद्धाचाराद्व्यवस्था द्रष्टव्या । मातुः सापिण्ड्यं पितामह्यादिभिः सह कर्त्तव्यम् । तदाह शङ्खः—

'मातुः सपिण्डीकरणं कथं कार्यं भवेत्सुतैः? ।
पितामह्यादिभिः सार्धं सपिण्डीकरणं स्मृतम्' ॥

इति । प्रमीतपितृकस्य विकल्पमाह यमः—

'जीवत्पिता पितामह्या मातुः कुर्यात् सपिण्डताम् ।
प्रमीतपितृकः पित्रा पितामह्याऽथ वा सुतः' ॥

इति । पुत्रिकासुतो मातृसपिण्डनं मातामहादिभिः सह कुर्यात् । तथा च बौधायनः—

'आदिशेत् प्रथमं पिण्डे मातरं पुत्रिकासुतः ।
द्वितीये पितरं तस्यास्तृतीये च पितामहम्' ॥

इति । अन्वारोहणे तु भर्त्रैव सापिण्ड्यं नियतम् । तदाह शातातपः—

'मृता याऽनुगता नाथं सा तेन सह पिण्डताम् ।
अर्हति स्वर्गवासे ऽपि यावदाभूतसंप्लवम्' ॥

इति । यमो ऽपि—

'पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः ।
साऽमृताऽपि हि तेनैक्यं गता मन्त्राहुति-व्रतैः' ॥

इति । अत्रैक्यशब्दः पितामह्यादिविकल्पव्यावृत्त्यर्थः । न त्रिपुरुषव्यावृत्त्यर्थः । सपिण्डीकरणस्य पार्वणैकोद्दिष्टरूपत्वात् । एतत्सर्वं ब्राह्मादिविवाहेषु द्रष्टव्यम् । आसुरादिविवाहे तु चतुर्धा विकल्पः । तत्र पक्षत्रयमाह शातातपः—

---

१. I. reads चितारोहणे for अन्वारोहणे. २. Except A. H. and I. all substitute सम for अथ; while H and I. read एक- for ऐक्य-. ३ D. reads पितामहादि for पितामह्यादि. ४ I reads -निवृत्त्यर्थ for -व्यावृत्त्यर्थ.

'तन्मात्रा तत्पितामह्या तच्छ्वश्रा[१] वा सपिण्डनम् ।
आसुरादिविवाहेषु वर्णानां योषितां भवेत्' ॥

इति । चतुर्थं पक्षमाह सुमन्तुः—

'पिता पितामहे योज्यः पूर्णे संवत्सरे सुतैः ।
माता मातामहे तद्वदित्याह भगवान् शिवः' ॥

इति । मातुः सापिण्ड्ये गोत्रनियममाह मार्कण्डेयः[२]—

'ब्राह्मादिषु विवाहेषु या वूढा कन्यका भवेत् ।
भर्तृगोत्रेण कर्तव्या तस्याः पिण्डोदकक्रिया ॥
आसुरादिविवाहेषु पितृगोत्रेण धर्मवित्' ।

(ग. पु. १. २६. २१-२०)

इति । लौगाक्षिरपि—

'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' ॥

इति । पत्न्याः सापिण्ड्यं दर्शयति पैठीनसिः—

'अपुत्रायां मृतायां तु पतिः कुर्यात् सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्' ॥

इति । पत्युः सापिण्ड्यमाह लौगाक्षिः

---

१. D. reads -स्वस्रा for -श्वश्रा. २. The following quotation cannot be traced in Mârkaṇḍeya-purâṇam. However it appears in Garuḍa-purâṇam. ३. H. and I. read गोल्राक्षि for लौगाक्षिः, but this is a mistake. D. omits the following six lines :-

'मातामहस्य गोत्रेण मातुः पिण्डोदकक्रियाः ।
कुर्वीत पुत्रिकापुत्र एवमाह प्रजापतिः' ॥

इति । पत्न्याः सापिण्ड्यं दर्शयति पैठीनसिः -

'अपुत्रायां मृतायां तु पतिः कुर्यात सपिण्डनम् ।
श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं भवेत्' ॥

इति । पत्युः सापिण्ड्यमाह लौगाक्षिः -

'सर्वाभावे स्वयं पत्न्यः स्वभर्तॄणाममन्त्रकम् ।
सपिण्डीकरणं कुर्युस्ततः पार्वणमेव च' ॥

इति । सुमन्तुरपि—

'अपुत्रे प्रस्थिते कर्त्ता नास्ति चेच्छ्राद्धकर्मणि ।
तत्र पत्न्यपि कुर्वीत सापिण्ड्यं पार्वणं तथा' ॥

इति । यत्तु स्मृत्यन्तरम्—

'अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डताम् ।
आशौचमुदकं पिण्डमेकोद्दिष्टं न पार्वणम् ॥
अपुत्रा ये मृताः केचित्पुरुषा वा तथा स्त्रियः[१] ।
तेषां सपिण्डनाभावादेकोद्दिष्टं न पार्वणम्' ॥

इति तत्पुत्रोत्पादनविधिप्रशंसापरतया व्याख्येयम् । यतीनां सापिण्ड्यं निषेधत्युशनाः[२]—

'सपिण्डीकरणं तेषां न कर्त्तव्यं सुतादिभिः ।
त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते ॥
एकोद्दिष्टं न कुर्वीत यतीनां चैव सर्वदा ।
अहन्येकादशे तेषां पार्वणं तु विधीयते' ॥

(औ. स्मृ. ७. १९-२०)

इति । इत्युभयात्मकं सपिण्डीकरणं निरूपितम् ॥

## अथ पार्वणविकृतिरूपं वृद्धिश्राद्धं निरूप्यते ।

तत्र याज्ञवल्क्यः—

'एवं प्रदक्षिणावृत्को[३] वृद्धौ नान्दीमुखान् पितॄन् ।
यजेत दधि-कर्कन्धुमिश्राः पिण्डा यवैः क्रिया' ॥

(या. स्मृ. १. २५०)

१. B. C. F. and G. read स्त्रियोऽपि वा for तथा स्त्रिय. २ H omits उशनाः and reads सापिण्ड्यनिषेधवचनम्. D. also reads the same, but it does not omit उशना. ३. D. and I read -वृत्तो and G. -वृत्त for -वृत्को.

इति। एवं पार्वणवदित्यर्थः। तथा च विष्णुधर्मोत्तरे—

'वृद्धौ समर्चयेद्विद्वान् नित्यं नान्दीमुखान् पितॄन्।
सम्पादितो विशेषस्तु शेषं पार्वणवद्भवेत्' ॥

(वि. ध. १. १४२. १९)

इति। पार्वणवदित्यनेनावाहन-त्रिपुरुषोद्देशादयोऽतिदिश्यन्ते। अयं तु विशेषः सम्पादितः नान्दीमुखसंज्ञकाः पितरः—इति। एतच्च प्रदक्षिणावृद् बदर-दध्यादीनां याज्ञवल्क्योक्तानामितरेषां च विशेषाणामुपलक्षणम्। ते च विशेषाः कात्यायनेन दर्शिताः—

'आभ्युदयिके श्राद्धे[1] प्रदक्षिणमुपचारः। पित्र्यमन्त्रवर्जनम्। ऋजवो दर्भाः। यवैस्तिलार्थः[2]। सुसम्पन्नमिति तृप्तिप्रश्नः। सुसम्पन्नमित्यनुज्ञा[3]। दधि-बदरा-ऽक्षतमिश्राः पिण्डाः। नान्दीमुखान् पितॄनावाहयिष्ये—इति पृच्छति। नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने। नान्दीमुखान् पितॄनर्चयिष्ये—इति पृच्छति। नान्दीमुखाः पितरः पितामहाः प्रपितामहाश्च प्रीयन्तामित्यनेन स्वधां कुर्यात्। युग्मानाशयेत्'।

इति। प्रचेता अपि—

'मातृश्राद्धं तु पूर्वं स्यात् पितॄणां तदनन्तरम्।
ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतम्' ॥

---

१. G. and H. omit श्राद्धे, and H. reads प्रदक्षिणब्राह्मणमुपचार. G. omits प्रदक्षिण-. २. D. G. and I. read तिलार्थम् and B. C. F. तिलार्थाः for तिलार्थः. ३. G. and H. read अनुज्ञात for अनुज्ञा.

न जपेत पैतृकं जप्यं न मांसं तत्र दापयेत् ।
प्राङ्मुखो देवतीर्थेन क्षिप्रं दर्शविमार्जनम्' ॥

इति । प्राङ्मुखः पिण्डदानादिकं कुर्यादित्यध्याहारः अत एव प्रचेताः—

'अपसव्यं न कुर्वीत न कुर्यादप्रदक्षिणम् ।
यथा चोपचरेद् देवान् तथा वृद्धौ पितॄनपि ॥
प्रदद्यात्प्राङ्मुखः पिण्डान् वृद्धौ सव्येन वाग्यतः' ।

इति । पिण्डदाने विशेषमाह वसिष्ठः—

'प्राङ्मुखो देवतीर्थेन प्राक्कूलेषु कुशेषु च ।
दत्त्वा पिण्डान् न कुर्वीत पिण्डपात्रमधोमुखम्' ॥

इति । पिण्डदानं न चोच्छिष्टसन्निधौ प्रदद्यात्

'नाप्राङ्मुखः पिण्डान् वृद्धौ नाम्ना वाऽप्याह्य ददाति' ।

इति शातातपस्मरणात् । नामोच्चारणं च प्रथमपिण्ड एव न द्वितीये । तदुक्तं चतुर्विंशतिमते

'एकं नाम्ना परं तूष्णीं दद्यात् पिण्डान् पृथक् पृथक्'

इति । एकैकस्मै द्वौ द्वौ पिण्डौ । तत्राद्यं नाम्ना द्वितीयं तूष्णीं दद्यादित्यर्थः । वृद्धिश्राद्धे पिण्डदानं वैकल्पिकम् । तथा च भविष्यत्पुराणम्

---

१. D. reads न यजेत् पैतृकं यज्ञं; while H. reads संयजन पैतृकं यज्ञ
२. We follow here A. and H. while B. C. and F. omit प्र in प्रदद्यात् and read the following quotation thus

प्राङ्मुख पिण्डान वृद्धौ नाम्ना स वाग्यत ।

E. also reads the same, but substitutes प्रदद्यात तत्राप्राङ्मुख for दद्यात् प्राङ्मुख . G. differs from B. C and F. in reading तत्र प्राङ्मुख for प्राङ्मुखः

'पिण्डनिर्वपणं कुर्यात् न वा कुर्यान्नराधिप ।
वृद्धिश्राद्धे महाबाहो कुलधर्मानवेक्ष्य तु' ॥

इति । वृद्धिश्राद्धनिमित्तान्याह लौगाक्षिः—

'नवान्न-चौल-गोदान सोमापायन-पुंसवे ।
स्नानो-ऽऽधान-विवाहेषु नान्दीश्राद्धं विधीयते' ॥

इति । कार्ष्णाजिनिरपि—

'कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
नामकर्मणि बालानां चूडाकर्मादिके तथा ॥
सीमन्तोन्नयने चैव पुत्रादिमुखदर्शने ।
नान्दीमुखान् पितृगणान् पूजयेत् प्रयतो गृही' ॥

इति । वृद्धगार्ग्योऽपि—

'अग्न्याधाना-ऽभिषेकादाविष्टापूर्ते क्रिया क्रतौ ।
वृद्धिश्राद्धं प्रकुर्वीत आश्रमग्रहणे तथा' ॥

इति ॥

## अथ श्राद्धकर्तृनिरूपणम् ।

इत्थं श्राद्धानि निरूपितानि । अधुना तत्कर्ता निरूप्यते । तत्र बृहस्पतिः—

'प्रमीतस्य पितुः पुत्रैः श्राद्धं देयं प्रयत्नतः ।
ज्ञाति-बन्धु-सुहृच्छिष्यैर्ऋत्विग्भृत्य-पुरोहितैः' ॥

इति । विष्णुपुराणेऽपि—

'पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः ।

---

१. H. substitutes स्थान- for स्नान-. २. All, except A. and I. om. अधुना. ३. The text reads बन्धुर्वा for तद्वद्वा.

सपिण्डसन्ततिर्वाऽपि क्रियार्हो नृप जायते'॥

(वि. पु. ३. १३. ३०)

इति। तत्र मुख्यानुकल्पौ विविनक्ति शङ्खः—

'पितुः पुत्रेण कर्तव्या पिण्डदानोदकक्रिया।

पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः'॥

इति। स्मृतिसङ्ग्रहेऽपि—

'पुत्रः कुर्यात् पितुः श्राद्धं पत्नी तु तदसन्निधौ।

धनहार्यथ दौहित्रस्ततो भ्राता च तत्सुतः॥

भ्रातुः सहोदरो भ्राता कुर्याद्दाहादि तत्सुतः।

ततस्त्वसोदरो भ्राता तदभावे तु तत्सुतः'॥

इति। पुत्रशब्देन मुख्या गौणाश्च पुत्रा गृह्यन्ते। तेषां सर्वेषामभावे पौत्रः कुर्यात्। तस्याभावे तु पत्नी। अत एव बृहस्पतिना पौत्रस्य पुत्रिकापुत्रसाम्यमुक्तम्—

'पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ।

रिक्थे च पिण्डदाने च समौ तौ परिकीर्तितौ'॥

इति। न चैतावता तयोः समविकल्पः शङ्कनीयः—

'नैव पौत्रेण कर्त्तव्यं पुत्रवांश्चेत् पितामहः'।

इति कात्यायनस्मरणात्।

'पत्न्यभावे तु सोदरः'।

इत्ययं क्रमः पत्न्या दायहरणे द्रष्टव्यः। अन्यथा यो दायहरः स एव कुर्यात्। अत एव विष्णवापस्तम्बौ—

१. B. C. F. G. and H. omit -अनुकल्पौ and read तत्र मुख्यादि विविनक्ति. २. H. reads च for तु. ३. H. omits एतावता and reads एतयोः.

‘यश्चार्थहरः[1] स पिण्डदायी’ ।

(वि. स्मृ. १५. ४०)

इति । पुत्रः पितृवित्ताभावेऽपि पिण्डं दद्यात्तदभावे सपिण्डो दद्यात् सपिण्डाभावे समानोदकादयः कुर्युः । तथा च मार्कण्डेयपुराणम्—

‘पुत्राभावे सपिण्डास्तु तदभावे सहोदकाः ।
मातुः सपिण्डा ये वा[2] स्युर्ये वा मातुः सहोदकाः ॥ (१९)
कुर्युरेनं विधिं सम्यक् अपुत्रस्य सुतासुतः[3] ।
कुर्यान्मातामहायैव पुत्रिकातनयस्तथा[4] ॥ (२०)
सर्वाभावे स्त्रियः कुर्युः स्वभर्तृणाममन्त्रकम् ।
तदभावे च नृपतिः कारयेत्तस्य रिक्थतः[5] ॥ (२१)
तज्जातीयैर्नरैः[6] सम्यक् दाहाद्याः सकलाः क्रियाः ।
सर्वेषामेव वर्णानां बान्धवो नृपतिर्यतः’ ॥

(मा. पु. ३०. १९–२२)

इति । सर्वाभावे स्त्रियः कुर्युरित्यासुरादिविवाहोढस्त्रीविषयम् । अतः पुत्राभावे तु पत्नीत्यनेन सहाऽविरोधः । तस्याः पत्नीत्वाभावात् । अत एव शातातपः तस्याः पत्नीत्वं निषेधति—

‘क्रयक्रीता* तु या नारी न सा पत्न्यभिधीयते ।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः’ ॥

---

१. H. reads अंशहरः for अर्थहरः. २. The text substitutes च for वा. ३. B. C. E. F. G. and H. read सुताः स्मृता for सुतासुतः. For the same D. and I. substitute श्रुताः स्मृता. ४. All, except A. I. and the text omit this line:—

कुर्यान्मातामहायैव पुत्रिकातनयस्तथा ॥

५. The text reads स्वकुटुम्बिना for तस्य रिक्थतः, and for रिक्थतः E. reads विश्रुतः. ६. E. H. and I. read तत्स्थानीयै for तज्जातीयै.

इति । पूर्व-मध्यमोत्तरासु पुत्रादीनां व्यवस्थितमधिकारं दर्शयति पराशरो विष्णुपुराणे—

'पूर्वाः क्रिया मध्यमाश्च तथैवोत्तरसंज्ञिताः ।
त्रिप्रकाराः क्रिया ह्येतास्तासां भेदं शृणुष्व मे ॥ (३४)
आ दाहादा दशाहाच्च मध्ये याः स्युः क्रिया मताः ।
ताः पूर्वा मध्यमा मासि मास्येकोद्दिष्टसंज्ञिताः ॥ (३५)
प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु ।
क्रियन्ते याः क्रियाः पित्र्याः प्रोच्यन्ते ता नृपोत्तराः ॥ (३६)
पितृ-मातृ-सपिण्डैस्तु समानसलिलैस्तथा ।
तत्सङ्घातगतैश्चैव राज्ञा वा धनहारिणा ॥ (३७)
पूर्वाः क्रिया मध्यमाश्च पुत्राद्यैरेव चोत्तराः ।
दौहित्रैर्वा नरश्रेष्ठ कार्यास्तत्तनयैस्तथा' ॥ (३८)

(वि. पु. ३. १३. ३४–३८)

इति । सपिण्डाद्यैरवनिपत्यन्तैः पूर्वाः क्रिया मध्यमाश्च कर्तव्याः । पुत्राद्यैरेव भ्रातृसन्तत्यन्तैः दौहित्राद्यैश्चोत्तराः क्रियाः कर्तव्याः । न सपिण्डाद्यैरवनिपत्यन्तैरित्यर्थः । औरसः सुतोऽनुपनीतोऽपि दाहादिकाः क्रियाः कुर्यात् । तदाह सुमन्तुः—

'श्राद्धं कुर्यादवश्यं तु प्रमीतपितृको हि यः ।
व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि' ॥

इति । अव्रतस्थोऽनुपनीतः । तदाह वृद्धमनुः

१. The text reads this line as follows
आदाहाद्यायां शुद्धिमध्यमासान्तास्तु या क्रिया ।
२. The text reads क्रमणादनु for -करणादनु ३. D. reads तत्सङ्घातान्तर्गत ४. B. C. and I. read आद्याद्याश्च कर्तव्या and I. पूर्वा क्रियाश्च कर्त- for पूर्वा क्रिया मध्यमाश्च. ५. Except A. and I. all substitute नृपति- for अवनीपति-.

'कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः।
पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य च'॥

इति। अत्र विशेषः प्रचेतसा [illegible]—

'कृतचूडस्तु कुर्वीत उदकं पिण्डमेव च।
स्वधाकारं प्रयुञ्जीत वेदोच्चारं न कारयेत्'॥

इति। माता-पित्रोरुभयोरपि कुर्वीतेत्यर्थः। तथा च स्मृत्यन्तरम्—

'कृतचूडोऽनुपेतस्तु पित्रोः श्राद्धं समाचरेत्।
उदाहरेत् स्वधाकारं न तु वेदाक्षराण्यसौ'॥

इति। यत्तु मनुनोक्तम्—

'न ह्यस्मिन् युज्यते कर्म किञ्चिदा मौञ्जिबन्धनात्॥ (१७१)
नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते'॥ (१७२)

(म. स्मृ. २. १७१, ७२)

इति तत् वर्षकृतचूडाविषयम्। तथा च सुमन्तुः—

'अनुपेतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।
यद्यसौ कृतचूडः स्याद् यदि स्याच्च त्रिवत्सरः'॥

इति॥

## अथ मातामहादिश्राद्धाधिकारनिर्णयः।

तत्र व्यासः—

'पितॄन्मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्।
अनृणः स्यात् पितॄणां तु ब्रह्मलोकं च गच्छति॥

१. D. and H. substitute वा for च, and for the same I. reads सः. २. D. reads व्रतकृतचूडाविषयम्, and B, C, F, and G. read त्रिवर्ष कृतचूडाविषयम्. ३. H. reads अनृणस्त्वान and I. अनृणं स्यात् for अनृणः स्यात्.

इति । मातामहानामिति बहुवचनं मातुः पितामहप्रपितामहयोरपि संग्रहार्थम् । तथा च पुलस्त्यः—

'मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः ।
तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः'[1] ॥

इति । पितृश्राद्धवन्मातामहश्राद्धमपि नित्यम् । अकरणे प्रत्यवायस्मरणात् । तदुक्तं स्कन्दपुराणे—

'पार्वणं कुरुते यस्तु केवलं पितृहेतुनः ।
मातामह्यं न कुरुते पितृहा स प्रजायते' ॥

इति । ऋष्यशृङ्गोऽपि

'पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम् ।
अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्' ॥

इति । मातामहश्राद्धं क्वचिदपवदति कात्यायनः—

'कर्षूसमन्वितं मुक्त्वा तथा श्राद्धं च षोडशम् ।
प्रत्याब्दिकं च शेषेषु पिण्डाः स्युः षडिति स्थितिः' ॥
(का. स्मृ. ३. २४. १४)

इति । कर्षूसमन्वितं सपिण्डीकरणश्राद्धम् । षोडशग्रहणमेकोद्दिष्टोपलक्षणार्थम् । सङ्घातमरणे श्राद्धक्रममाह ऋष्यशृङ्गः—

'भवेद्यदि सपिण्डानां युगपन्मरणं तथा ।
संम्बन्धासत्तिमालोच्य तत्क्रमाच्छ्राद्धमाचरेत्'[2] ॥

इति । अत्र पत्न्यादिसपिण्डेषु सम्बन्धासत्तिरेवं द्रष्टव्या—पति-पत्न्योः सम्बन्धः प्रत्यासन्नः । एकप्रतियोगिकत्वादव्यव-

---

१. H. reads कुर्यान्न विस्तरमस्तु सः for कुर्युर्दुहितृसूनवः. २. D. reads सम्बन्धादि समालोक्य.

धानाच्च। पुत्रस्य तु माता-पितृद्वयनिरूप्यत्वेन विलम्बितप्रति-पत्तेर्विप्रकृष्टः सम्बन्धः। भ्रातुस्तु पितृजत्वव्यवधानेन ततोऽपि विप्रकृष्टः। एवमन्यत्रोहनीयम्। पत्न्यादीनां पित्रोश्च सङ्घातमरणे ऋष्यशृङ्गः—

'पत्न्याः पुत्रस्य तत्पुत्र-भ्रात्रोस्तत्तनयस्य च।
स्नुषा-श्वश्र्वोश्च पित्रोश्च सङ्घातमरणं यदि॥
अर्वागब्दान्मातृ-पितृपूर्वं सापिण्ड्यमाचरेत्'।

इति। तत्पुत्रः पुत्रपुत्रः। तत्तनयो भ्रातृतनयः। यत्तु देवलेनोक्तम्—

'प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्।
न दैवं नापि पित्र्यं च यावत् पूर्णो न वत्सरः'॥

इति तत्पूर्वोक्तपत्न्यादिव्यतिरिक्तसपिण्डविषयम्। अत एव लौगाक्षिः—

'अन्येषां प्रेतकार्याणि महागुरुनिपातने।
कुर्यात् संवत्सरादर्वाक् श्राद्धमेकं तु वर्जयेत्'।

इति। प्रेतकार्याणि दहनादीन्याद्यश्राद्धान्तानि विवक्षितानि।

'आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि'।

इति विशेषस्मरणात्। एकमित्यन्यदित्यर्थः। पित्रोः सङ्घातमरणे देवलः—

---

१. D. and G. read मातुस्तु for भ्रातुस्तु; while all except A. and I. read -पितृव्यवधानेन for -पितृजत्वव्यवधानेन. २. A. reads उदाहरणीयम for ऊहनीयम्. ३. D. reads -मरणं सति for -मरणं यदि. ४. All, except D. read पितरौ प्रमितौ and B. C. E. and F. read पितरौ प्रसूतौ. ५. H. reads -साापिण्ड्य- for -सपिण्ड- and D. omits -सपिण्ड-.

'पित्रोरुपरमे पुत्राः क्रियाः कुर्युर्द्वयोरपि ।
अनुवृत्तौ च नान्येषां सज्ञातमरणेऽपि वा' ॥

इति । सहगमनेन पित्रोः सज्ञातमरणे मातुरनुगमनेन दिनान्तरमरणेऽपि तत्तद्दादशाहे क्रियां कुर्युः । अन्येषां पित्रोश्च सज्ञातमरणे यथाकालं न कुर्युः । किन्तु विपक्ष एव । तदाह लौगाक्षिः—

'पत्नी पुत्रस्तथा पौत्रो माता तत्पुत्रका अपि ।
पितरौ च यदैकस्मिन् म्रियेरन् वासरे तदा ॥
आद्यमेकादशे कुर्यात् विपक्षे तु सपिण्डनम्' ।

इति । पित्रोरनुगमनं विना सज्ञातमरणे मातुरनुगमनं विना दिनान्तरमरणेऽपि मातुर्विपक्षे सपिण्डनं कुर्यात् । तथा च देवलः—

'एकाहमरणे पित्रोरन्यस्यान्यदिने मृतौ ।
सपिण्डनं विपक्षे स्यादनुयानमृतिं विना' ॥

इति । मातृ-पितृश्राद्धद्वयस्य दैवात्कालैक्येऽपि पितृश्राद्धं पूर्वं कुर्यात् । तदाह कार्ष्णाजिनिः—

'पित्रोः श्राद्धे समं प्राप्ते नैव पर्य्युषितेऽपि वा ।
पितृपूर्वं सुतः कुर्यादन्यत्रामन्त्रियोग्यतः' ॥

इति । अन्यत्र मातृपितृव्यतिरिक्तविषये सम्बन्धासत्तियोग्यतः कुर्यादित्यर्थः । यत्तु प्रचेतसोक्तम्—

---

१. Except A. and G. all read क्रियां for क्रिया. २. All except ... and I read च for वा. ३. Except A. all read अनुगमनेन for सहगमने. ४. D. reads सद्य for तत्तद्. ५. G. reads लौगाक्षि for लौगाक्षिः. ६. ... reads आमन्त्रि- for आसत्ति

'नैकः श्राद्धद्वयं कुर्यात् समानेऽहनि कुत्रचित्' ॥

इति तदेकस्मिन् श्राद्धे क्रियमाणे दैवतैक्यात् अन्यस्य प्रसङ्गात् यत्र सिद्धिस्तद्विषयम्। यथा नित्यश्राद्धामावास्याश्राद्धयोरमावास्याश्राद्धेन नित्यश्राद्धसिद्धिः प्रासङ्गिकी। यथा वा दार्शिकयुगादिश्राद्धयोर्युगादिश्राद्धेनैव दार्शिकसिद्धिः। पित्रोर्मृताहैक्ये सत्यन्वारोहणविषये लौगाक्षिणा विशेष उक्तः—

'मृतेऽहनि समासेन पिण्डनिर्वपणं पृथक्।
नवश्राद्धं तु दम्पत्योरन्वारोहण एव तु' ॥

इति। पिण्डनिर्वपणं श्राद्धं समासेन पाकाद्यैक्येन पृथगसपत्नीकं कुर्यात्। नवश्राद्धमपि तथा कुर्यात्। स्मृत्यन्तरमपि—

'एकचित्यां समारूढौ दम्पती निधनं गतौ।
पृथक् श्राद्धं तथा कुर्यादोदनं नै पृथक् पृथक्' ॥

इति। अनेकमातृभिरेकचित्यामन्वारोहणे कृते पाकाद्यैक्येन प्रथमं पितुस्तदनन्तरं साक्षान्मातुस्ततो ज्येष्ठादिक्रमेण कुर्यात्। तदाह भृगुः—

'एककाले गतासूनां बहूनामथ वा द्वयोः।
तन्त्रेण श्रपणं कुर्यात् श्राद्धं कुर्यात् पृथक् पृथक् ॥
पूर्वकस्य मृतस्यादौ द्वितीयस्य जघन्यतः।
तृतीयस्य ततः कुर्यात् सन्निपातेष्वयं क्रमः' ॥

इति। पूर्वकस्य मुख्यस्य पितुः। द्वितीयस्य ततो जघन्याया जनन्याः। तृतीयस्य ततोऽपि जघन्यतया परमातुरित्यर्थः। पार्वणैकोद्दिष्टयोः सन्निपाते जाबालिः—

१. I. reads यत्रान्यस्य प्रसङ्गात सिद्धिः. २. All, except A. and I. read नै for न. ३. D. reads विधि for क्रम ४. I. reads जघन्यया मातुरित्यर्थ, while D. reads जघन्यमातु, and G. and H. जघन्याया मातु for the same

'यद्येकत्र भवेतां चेदेकोद्दिष्टं च पार्वणम् ।
पार्वणं त्वभिनिर्वर्त्य एकोद्दिष्टं समाचरेत्' ॥

इति । अनेकनिमित्तसन्निपाते निमित्तानुक्रमेण श्रा कुर्यात् । तथा च कात्यायनः—

'द्वे बहूनि निमित्तानि जायेरन्नेकवासरे ।
नैमित्तिकानि कार्याणि निमित्तान्यप्यनुक्रमात्' ॥

इति । यद्यप्येकदेवताकश्राद्धद्वयमेकस्मिन्नहनि न युक्त एकानुष्ठानेनेतरप्रयोजनस्यापि प्रसङ्गात् सिद्धेः तथापि नैमित्तिकानि वचनबलादनेकान्यप्यनुष्ठेयानि । तथा च जाबालिः-

'श्राद्धं कृत्वा तु तस्यैव पुनः श्राद्धं न तद्दिने ।
नैमित्तिकं तु कर्त्तव्यं निमित्तानुक्रमोदयम्' ॥

इति । नित्य-काम्ययोरेकदेवताकयोः सन्निपाते काम्येनैव नित्यसिद्धिः । तदुक्तं स्मृतिसंग्रहे—

'काम्यतन्त्रेण नित्यस्य तन्त्रं श्राद्धस्य सिद्ध्यति'।

इति ॥

यत्राशौचविधानजातमजहत्स्वार्थप्रयुक्त्या दृशा
प्रोक्तं यत्र च संगृहीतवपुषां श्राद्धं समृद्ध्यै पदम् ।
अध्यायं तदबाह्यनिर्णयविदां तार्त्तीयमार्त्तिच्छिदं
सोऽयं व्याकुरुते स्वतन्त्रमहिमा मन्त्रीश्वरो माधवः ॥

---

१. I. reads मम for स्वभि०. २. I. reads निमित्तानुक्रमादिति. ३. D. reads सङ्ग्रहे for स्मृतिसङ्ग्रहे. ४. This and the following three lines are not found in all except A. and I.

इति श्रीमहाराजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्कभूपालसाम्राज्यधुरन्धरस्य माधवामात्यस्य कृतौ पराशरस्मृतिव्याख्यायां माधवीयायां तृतीयोऽध्यायः समाप्तः ॥ ३ ॥

॥ समाप्तमिदमाचारकाण्डम् ॥

The names occurring in the Paras'ara Samhita.

## ADHYÂYÂS. II & III.

१. पराशरः 1, 15. 204, 10.
२. ऋषयः 255, 3.
३. सूर्यमण्डलम् 268, 17.
४. भास्करः 270, 12.
५. देवकन्याः 271, 17.
६. देवाङ्गनाः 272, 3.
७. स्वर्गः 272, 10.
८. लक्ष्मीः 273, 4.
९. सुराङ्गनाः 273, 4.
१०. नदीः 282, 5.
११. समुद्रः 282, 5.

## A list of the names of authors, works, etc., occurring in Mâdhavâchâryâ's Commentary on the Parâs'ara Sâṃhitâ, Adhyâyâs II. and III.

# Index of Quotations, Vol. I., Part II.



* This index as well as that to the first part of this work presents a quotation under that name only, under which the author quotes it, notwithstanding its occurrence in works of other names.

३. आचार्याः—



४. *आथर्वणीश्रुतिः—



५. आदित्यपुराणम्—



* The quotations under this heading appear in Prasnopanishad.

## ६. आदिपुराणम्—



## ७. *आनुशासनिकम्—



---

* In the first part of the present volume the quotations from the different Parvâs of Mahâbhâratam are given under the general heading महाभारतम्, but in the present part the arrangement is changed for convenience of the reader, and the quotations are placed under the names of their respective Parvâs. However, in the case of such quotations, as have their Parvâs not specified by the author, the former order has been retained.

**९. *आरुणिश्रुतिः—**



**१०. †आश्वमेधिकम्—**



**११. *आश्वलायनगृह्यम्—**



**१२. †आश्वलायनः—**



**१३. ‡उमा-महेश्वरसंवादः—**



**१४. उशनाः—**



---

* The quotations under this heading appear in Ârupeyôpanishad.

† *Vide* footnote on page 3 of this Index

* Full name आश्वलायनगृह्यसूत्रम्.

† Possibly आश्वलायनस्मृतिः.

‡ *Vide* footnote on page 5 of the List of the Names of Authors, Works, &c., given at the end of the first part.

*Vide* Prefatory Notes, P. 5, L. 2.
† कश्यप: and काश्यप: denote one and the same author.

* Probably काठकगृह्यसूत्रम्.

† *Vide* Prefatory Notes, P. 5, L. 21

२३. कार्ष्णाजिनिः—



२४. कालिकापुराणम्—



२५. *काश्यपः—



२६. कूर्मपुराणम्—



* *Vide* the second footnote on page 6 of this Index.

* Every Śâkhâ of the Vedâs has its own Gṛihyam or Gṛihya-sûtram, and so it is an extremely laborious task to decide to what particular Gṛihyam the quotations given below belong.

* Every Grihyam has its own Parisishtam or appendix, and so the particular Parisishtam cannot be specified here.

३७. चतुर्विंशतिमतम्—



३८. *छन्दोगश्रुतिः—



३९. *छन्दोगाः—



४०. छागलेयः—



४१. जमदग्निः—



* The quotations appear in Chhândogyopanishad.

* The quotations appear in Jâbâlopanishad.



* Jâbâlah and Jâbâlih may be one and the same author, and the quotations may appear in Jâbâlasmriti.

* The quoted line appears in Nṛisinhatâpanîyopanishad.

### ५०. दत्तात्रेयः—



### ५१. देवलः—

**५२.* देवस्वामिः—**



* Devaswâmi is the author of Smriti-Chandrikâ, Grihyasûtra-bhâshya, &c.

* Possibly Dharmasmriti.

* Mimānsa Sūtras of Jaimini.

* Possibly this is an Upanishad.

* The quotations belong to different Purāṇās.

---

* The quotations belong to different *Purāṇas.*

**६८. प्रचेताः—**

* A Khanda of Skandapurāṇam.

७५. बैजवापः—



७६. *बौधायनधर्मः—



७७. बौधायनः—



* Ordinarily called Baudhâyanadharmasûtram.

७८. ब्रह्मगर्भः—



७९. ब्रह्मनिरुक्तम्—



८०. ब्रह्मपुराणम्—

८१. ब्रह्माण्डपुराणम्—

* The quotations belong to different Brâhmaṇa of the Vedâs.
† Bhagavadgîtâ.

5

१०. *मत्स्यपुराणम्—



* Matsyaḥ and Matsyapurâṇam denote the same work.



११. *मदालसावाक्यम्—



१२. मन्त्रवर्णः—



* The quoted line is tak from a dialogue in Mârkaṇḍe purâṇam between Madâlasâ a her son Alaka.

९३. मनु:—

## १४. मरीचिः—



## १८. *महाभारतम्—



* *Vid.* footnote on P. 3, L. 21.

९६. मार्कण्डेयपुराणम्—



९७. मार्कण्डेयः—

९८. मेधातिथिः–

९९. मैत्रायणश्रुतिः—



१००. यमः—

१०७. वत्सः—



१०८. वसिष्ठः—

११६. विष्णुः—

### १२७. व्यासस्मृतिः —

### १२८. शङ्ख-लिखितौ—



### १२९. शङ्खः—

१४६. सुश्रुतः-



१४७. स्कन्दपुराणम्—

* The quoted lines belong to different Smṛitis. But as the same line sometimes appears in more than one Smṛiti no mention is made here of the different Smṛitis.

**१९३. हारीतस्मृतिः—**



**१९४.** * Anonymous Quotations



* These quotations are taken from various works. But as the same quotation sometimes appears in different works, they are put here under the heading "Anonymous Quotations."

# BOMBAY SANSKRIT SERIES.

*Edited under the superintendence of Dr. P. Peterson and Dr. R. G. Bhandarkar.*

| | Rs. | a. | p. |
|---|---|---|---|
| No. I.—Pañchatantra, Books IV. and V. Edited, with Notes, by Dr. Bühler... ... ... ... ... ... ... ... | 0 | 4 | 0 |
| No. II.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. Kielhorn. The Sanskrit Text and various Readings, Part I. ... ... ... ... ... ... | 0 | 8 | 0 |
| No. III.—Pañchatantra, Books II. and III. Edited, with Notes, by Dr. Bühler... ... ... ... ... ... ... | 0 | 4 | 0 |
| No. IV.—Pañchatantra, Book I. Edited, with Notes, by Dr. F. Kielhorn ... ... ... ... ... ... ... ... ... | 0 | 7 | 0 |
| No. V.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part I., Cantos I.—VI. ... ... ... | 1 | 0 | 0 |
| No. VI.—Mâlavikâgnimitra: a Sanskrit Play by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... | 2 | 2 | 0 |
| No. VII.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs I.—XXXVII. ... ... ... | 0 | 8 | 0 |
| No. VIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part II., Cantos VII.—XIII. | 0 | 12 | 0 |
| No. IX.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs XXXVIII.—LXIX ... ... | 0 | 8 | 0 |
| No. X.—The Daśakumâracharita of Daṇḍin. Part I. Edited, with Critical and Explanatory Notes, by Dr. Bühler... ... ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XI.—The Nîtiśataka and Vairâgyaśataka of Bhartṛihari, with extracts from two Sanskrit Commentaries. Edited, with Notes, by Kâshinâth Trimbak Telang, M.A. (Copies not available.) | | | |
| No. XII.—Nâgojibhaṭṭa's Paribhâshendusekhara. Edited and explained by Dr. Kielhorn. Part II. (Translation and Notes), Paribhâshâs LXX.—CXXII. ... ... | 0 | 8 | 0 |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XIII.—The Raghuvaṁśa of Kâlidâsa, with the Commentary of Mallinâtha. Edited, with Notes, by S. P. Pandit, M.A. Part III., Cantos XIV.—XIX. | 0 | 8 | 0 |
| No. XIV.—Vikramâṅkadeva-Charita. Life of King Vikramâditya Tribhuvanamalla of Kalyâṇa, composed by his Vidyâpati Bilhaṇa. Edited, with an Introduction, by Dr. G. Bühler (Copies not available.) | | | |
| No. XV.—Mâlatî-Mâdhava: a Drama by Bhavabhûti. Edited, with Critical and Explanatory Notes, by Dr. R. G. Bhandarkar, M.A. (Second Edition in the Press.) | | | |
| No. XVI.—Vikramorvaśî: a Drama by Kâlidâsa. Edited, with Notes, by Shankar P. Pandit, M.A. ... ... | 1 | 4 | 0 |
| No. XVII.—Hemachandra's Deśînâmamâlâ. Edited, with Critical Notes, a Glossary and a Historical Introduction, by Professor R. Pischel and Dr. G. Bühler. Part I. Text and Critical Notes by Professor Pischel | 1 | 0 | 0 |
| No. XVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. I. complete. Parts I. II. and III. ... ... | 9 | 0 | 0 |
| No. XIX. Ditto ditto by ditto. Vol. I. Part II. | 1 | 0 | 0 |
| No. XX. Ditto ditto by ditto. Vol. I. Part III. | 1 | 0 | 0 |
| No. XXI. Ditto ditto by ditto. Vol. II. Part I. | 1 | 0 | 0 |
| No. XXII. Ditto ditto by ditto. Vol. II. Part II. | 1 | 0 | 0 |
| No. XXIII. Vâsishṭhadharmaśâstram. Edited, with Notes, by Dr. A. A. Führer ... ... ... ... ... ... | 0 | 8 | 0 |
| No. XXIV.—Kâdambarî by Bâṇa and his son. Vol. I. Sanskrit Text, complete. Edited by Dr. P. Peterson. (Copies not available). | | | |
| Do. Vol. II. Introduction and Notes, by do. ... | 2 | 0 | |
| No. XXV.—Kîrti-Kaumudî. Edited, with Notes, by Prof. A. V. Kathavate (Copies not available) ... | | | |
| No. XXVI.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. II. Part III. ... | 1 | 0 | |
| No. XXVII.—Mudrârâkshasa, by Viśâkhadatta, with the Commentary of Dhuṇḍhirâja. Edited, with Notes, by K. T. Telang (Copies not available.) | | | |
| No. XXVIII.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn. Vol. III. Part I. ... | 1 | ( | |
| No. XXIX.—Vyâkaraṇa-Mahâbhâshya of Patañjali. Edited by Dr. F. Kielhorn, Vol. III. Part II. ... ... | 1 | | |
| ... do. by do. Vol. III. Part III. | 1 | | |

| | Rs. | a. | p. |
|---|---|---|---|
| No. XXXI.—Subhâshitâvali of Vallabhadeva. Edited by Dr. P. Peterson and Pandit Durgaprasad ... | 2 | 8 | 0 |
| No. XXXII.—Tarka-Kaumudî of Laugâkshi Bhâskara. Edited by Professor M. N. Dvivedi ... ... ... | 0 | 12 | 0 |
| No. XXXIII.—Hitopadeśa of Nârâyaṇa. Edited by Dr. P. Peterson... ... ... ... ... ... ... ... ... | 0 | 14 | 0 |
| No XXXIV.—The Gauḍavaho, by Vâkpati. Edited by Shankar P. Pandit ... .. ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XXXV.—Mahânârâyaṇa Upanishad. Edited by Colonel G. A. Jacob ... ... ... ... ... ... ... ... | 0 | 7 | 0 |
| No. XXXVI.—University Selections of Hymns from the Rigveda. Edited by Dr. P. Peterson ... ... ... | 4 | 0 | 0 |
| No. XXXVII.—Śârṅgadharapaddhati. Edited by Dr. P. Peterson. Vol. I.... ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XXXVIII—Naishakarmyasiddhi. Edited by Col. G. A. Jacob ... ... ... ... ... ... ... ... | 2 | 0 | 0 |
| No. XXXIX.—A Concordance to the principal Upanishads and Bhagvadgîtà, by the same author ... ... | 8 | 0 | 0 |
| No. XL.—Eleven Atharvaṇa Upanishads, with Dîpikâs, by the same author ... ... ... ... ... ... ... | 2 | 8 | 0 |
| No. XLI.—Handbook to the Study of the Ṛigveda, by Dr. P. Peterson. Part I. ... ... ... ... ... | 3 | 0 | 0 |
| No. XLII.—The Daśakumaracharita of Daṇḍin. Part II. (completing Dr. Buhler's Edition). Edited with Critical and Explanatory Notes by Dr. P. Peterson | 0 | 8 | 0 |
| No. XLIII.—Handbook to the Study of the Rigveda, by Dr. P. Peterson. Part II. comprising the Seventh Maṇḍala with the Commentary of Sâyana... | 5 | 0 | 0 |
| No. XLIV.—Aphorisms of the Sacred Law of the Hindus, an Index of the Sutras and the various Readings of the Hiranyakeshi-Dharmasutra, by Dr. G. Bühler ... ... ... ... ... ... ... ... | 2 | 12 | 0 |
| No. XLV.—Rajatarangini. Edited by Pandit Durgaprasad, Part I. containing the first 7 (seven) Tarangas ... ... ... ... ... ... ... ... | 3 | 0 | 0 |
| No. XLVI.—Patanjali's Yogasutras. Edited with the Scholium of Vyâsa and the Commentary of Vachaspati, by Rajaram Shastri Bodas .. ... ... ... ... | 3 | 4 | 0 |
| No. XLVII.—Pârâśara Dharma Samhitâ with the Commentary of Sâyana Mâdhavâcharya, Vol I, Part I. Edited by Pandit Vaman Shastri Islâmpurkar ... | 4 | 4 | 0 |

The Department of Public Instruction, Bombay.

THE

# PARÂŚARA DHARMA SAMHITA

OR

## PARÂŚARA SMṚITI,

WITH

THE COMMENTARY

OF

SÂYAṆA MÂDHAVÂCHÂRYA.

EDITED WITH VARIOUS READINGS, CRITICAL NOTES, AN INDEX, APPENDICES, &c.

BY

PAṆDIT VÂMAN ŚÂSTRI ISLÂMPURKAR.

VOLUME II., PART I.

(500 COPIES.)



Bombay:
GOVERNMENT CENTRAL BOOK DEPÔT.

1898.



*Price Rs.* 4-0-0

Bombay Sanskrit Series No. LIX.

# पराशरधर्मसंहिता

अथवा

पराशरस्मृतिः

## सायणमाधवाचार्यकृतटीकासहिता.

पाठान्तराणि, अर्थविवेचकटिप्पणी, वाक्यसूची, परिशिष्टानि च
इत्यादिभिः सहिता.

धर्मं चरत माऽधर्मं सत्यं वदत माऽनृतम् ।
दीर्घं पश्यत मा ह्रस्वं परं पश्यत माऽपरम् ॥
( वसिष्ठः )

## प्रायश्चित्तकाण्डम्.

चतुर्थ-पञ्चम-षष्ठ-सप्तम-अष्टम-नवम-दशम-
एकादशाध्यायाः ।

सा च

उस्लामपुरग्रामजनुषा विद्वद्वरगोविंदशास्त्रिसूनुना
वामनशर्मणा संशोधिता.

मुम्बई:

शके १८२०.
राजकीयशकाब्दाः १८९८.

# PREFATORY NOTES.

Generally Manu, Yâjñyavalkya and other famous Smṛitikâras have viewed Hindu Law in its three aspeçts, arranging them in the following order, *viz.*, *first* Âcâra, *second* Vyavahâra and *the third* Prâyaścitta. The Smṛitikâra Parâśara dwells on Âcâra and Prâyaścitta only, and restricts his remarks on Vyavahâra to only a few ślokas, which appear mixed up with the latter portion of the Âcârakâṇḍam. In other words, Vyavahâra has been given but a very small space. Such is not the case with the Commentator Mâdhavâcârya who treats of Vyavahâra at length, conveniently making several divisions and subdivisions of the subject, the same as is done in the other Kâṇḍâs. But he has departed from the general order observed by several other Smṛitikâras and Commentators with regard to the arrangement of the three Kâṇḍâs, in that he has given Vyavahâra the last place, and I have been accordingly obliged to follow the same order.

It is possible for one, at the outset, to consider that the Index I have appended to this part, as well as that to each of the two parts of the first volume, is practically valueless, since it is not an alphabetically arranged list of all the quotations that occur throughout the respective volumes, but is made up of several separate alphabetical lists confined to the quotations from one author. For, it was thought that unless one knew the particular author quoted, one may have to examine

hundreds of lists to find out the line quoted. If I had followed the usual practice of making one list of all the quotations occurring throughout each part, the indexes thus prepared would have been defective and would not have served the purpose of any one unless he knew the particular part of the volume from which the quotation may have been given, or else he would have been obliged to go through the whole index of each part till he came across the required quotation. With a view to avoiding these defects I intend to give a general index on completion of this work, embodying the indexes appended to the various parts.

I.

The following is a brief notice of the printed copies and MSS. made use of in the compilation of this volume of Parâśara Saṃhitâ :—

*A.*—Mr. Veṅkatswâmi of Madras who had kindly lent me the previous Kâṇḍam, added to his kindness by furnishing me with the Prâyaścitta Kâṇḍam also. As this is only the latter portion of the MS. appearing under the same letter, *viz.*, *A* in the first volume, and as the necessary particulars have been given there, it is, I consider, needless to repeat them here.

*B.*—This MS. is different from that referred to in the first volume under this mark. It belongs to the Deccan College Library, Viśrâm Bâga collection. It has 257 leaves, each page containing eight lines and each line consisting of letters between 37 to 39. It is written on Portuguese paper, bears no date, has many omissions and is incorrect.

*C.*—This is also a subsequent part of the MS. eferred to under this mark in the first volume. t is incomplete, ending at the word प्राश्नीयात्. The olophon is as follows:—

> ॥ राम ॥ राम ॥ ॐ ॥ श्री ॥ राम ॥ श्री ॥ रामाय नमः ॥ ॥ श्रीगणेशाय नमः ॥ रामः ∵ ∵ (See page 191, Vol. II., Pt. II.)

It has 241 leaves, having ten lines on a page and etween 32 to 33 letters in a line.

*D.*—This is also a further portion of the MS. made use of in the first volume. The number of leaves is 179, having ten lines on a page and nearly 48 letters in a line. It is closely connected with B., and bears no date.

*E.*—This is also the subsequent part of the Âcâra Kâṇḍam already referred to in the first volume. It has 193 leaves, each page containing twelve lines, and each line about 45 letters, and bears no date.

*F.*—This MS. also belongs to the Viśrâm Bâga collection, and is different from that alluded to in the former volume. It is imperfect, ending with the following colophon:—

इति श्रीमहाराजाधिराजपरमेश्वरवैदिकमार्गप्रवर्तकश्रीवीरबुक्कभूपालसाम्राज्यधुरंधरस्य माधवामात्यस्य कृतौ पाराशरस्मृतिव्याख्यायां माधवीयां नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ श्रीशुभं भवतु ॥ (See page 194, Vl. II., Pt. II.)

It has 193 leaves, each page containing ten lines of about 41 letters each.

*G.*—This too is a subsequent part of the Âcâra-Kâṇḍam referred to in the first volume. It has

217 leaves, each page having nine lines of about 34 letters each. It bears no date.

*H.*—This is also the second Kâṇḍam of the MS. used in the first volume. It consists of 179 leaves, each page having 12 lines and each line about 48 letters. The colophon is **संवत् १७९९ मिति आषाढ कृष्णपक्षे १ वार बुधवार लिखतं काशीमध्ये.**

*J.*—This MS. belongs to the Deccan College collection *A* of 1879-80. It contains only the Prâyaścitta Kâṇḍam. It has 139 leaves, each page containing between 10 and 14 lines, and each line about 42 letters. It does not bear any date, and looks very old. The writing is after the Jaina style.

## II.

Here I briefly describe the works, which came to hand since the publication of the first volume, and references to which have been given in the present volume.

**आश्वलायन**—*A.*—I have obtained on loan two MSS. of a Smṛiti of this author. One of them, marked A[1]., belongs to the Ânandâśrama at Poona. It is in verse, and divided into twenty Prakaraṇas, and in the colophon to each Prakaraṇa it is named as Âśvalâyanîya Dharma-Śâstra, whereas the marginal title is Âśvalâyana Smṛiti. The date is शके १७०४. It consists of 35 leaves, of which the first thirty-one are properly numbered ; the numbers 32 and 33 are double, each of the four leaves containing a different version from that given on the corresponding number. The respective colophons of the two versions run as under :—

१. **इत्याश्वलायनधर्मशास्त्रे श्राद्धोपयोगिप्रकरणम् ।**

२. **इत्याश्वलायनधर्मशास्त्रे श्राद्धविधावष्टादशोऽध्यायः ।**

The number of verses is 885. The MS. has nine leaves more, having been numbered consecutively from 34 to 42, but apparently these leaves form a part of some other work of Âśvalâyana and have no connection whatsoever with the present MS. The copyist of this portion is also a different one. It begins with—

ज्ञानाज्ञानकृतस्येह ब्रह्महत्यादिकस्य च ।

and ends with the following colophon :—

इत्याश्वलायनीये धर्मशास्त्रे द्वाविंशः ।

The other MS., marked A[2]., belongs to the Deccan College Library (No. 87 of the collection of 1884-86).

The title given to this MS. in the colophon to each of the Prakaraṇa is also Âśvalâyanîya Dharmaśâstram. The general colophon is सम्पूर्णेयमाश्वलायनस्मृतिः. The date is संवत् 1881. The number of verses is 805. Both the MSS. open with—

आश्वलायनमाचार्यं नत्वापृच्छन्मुनीश्वराः ।
द्विजधर्मान् वदास्माकं स्वर्गप्राप्तिकरान् मुने ।।
इति तद्वचनं श्रुत्वा स धर्मान् मुनिरब्रवीत् ।
धर्मान् वः पुरतो वक्ष्ये ध्यात्वाऽहं भो मुनीश्वराः ।।.

*B.*—Another most important, excellent and very rare MS., marked B, of the same name is that discovered by me in my recent search for manuscripts in the Ahmednagar district and some part of the Nizam's territory, Paithaṇa, &c. I have compared this manuscript with quotations in अपरार्के, हेमाद्रि स्मृतिचंद्रिका, स्मृत्यर्थसार, माधव, विज्ञानेश्वर, &c., which are considered as आकर or authoritative works on Dharmaśâstra. These works have several quotations from the Smṛiti in question, which is much bigger than the previous

two, consisting of eleven chapters, the number of verses nearly coming up to 1974. It begins with—

ऋषिमेकाग्रमासीनमाश्रमे शंसितव्रतम् ।
प्रणम्य शिष्याः पप्रच्छुस्तं धर्मानाश्वलायनम् ॥
श्रोतुमिच्छामहे धर्मान् भगवन् भवतोदितान् ।
वर्णाश्रमाचारगतान् अ. द्धर्मांश्च कृत्स्नशः ॥.

On comparison I find that the work is quite different from the Smriti, alluded to above. It appears to•be very old. The colophon is इत्याश्वलायनीये धर्मे एकादशो ऽध्यायः । श्रीरस्तु । शुभं भवतु । १७२ शार्वरीनाम । लाळ्योपनाम्ना माधवेन लिखित. The copyist by his surname and by the style of his penmanship seems to be an inhabitant of Mahârâshṭra. There are still a few Brahmin families at Poona and Sâtârâ in Mahârâshṭra bearing the surname लाळे. The people all over Mahârâshṭra, however, commonly use the Śaka Era in noting dates, while the Saṃvat Era is used in the provinces north of the river Narmadâ. From this I have come to the conclusion that the copyist must have used the Śaka Era. But 172 Śaka as the date of the Manuscript is an evident mistake, wherefore it must clearly be meant for 1702 with which the cyclic year Śârvari corresponds.

The following extract taken from the eleventh chapter of this MS. throws light to some extent on the religious literature of India, particularly on the Sûtra literature, and as regards the time and authorship of certain Smṛitis. The only Bhâshya on Âśvalâyana's Śrautasûtra, known (from other works) to scholars of Sanskṛit, is that of Devaswâmi, and it is believed that Âśvalâyana has had no Bhâshya of his own on his Śrautsûtra. But the above-mentioned extract makes us aware

of such a Bhâshya having been composed by Âśvalâyana himself and leaves no doubt as to its existence at one time. The day on which such lost treasures will be recovered will indeed deserve to be recorded in golden letters in the annals of Sanskṛit religious literature.

श्रौतस्य कर्मणः सिद्ध्यै श्रौतसूत्रं मया कृतम् ।
श्रौतस्यैवं च यद्भाष्यं मयैव च कृतं द्विजाः ॥ १४ ॥
गृह्यभाष्यं करिष्यन्ति द्विजा इति न मे कृतम् ॥ १६ ॥
यथा वै ते करिष्यन्तीत्येकाग्रमनसा स्थिताः ।
अचिन्तयमिदं सर्वं सर्वतो दिव्यचक्षुषा ॥ १७ ॥
दृष्ट्वा करिष्यमाणानां भाष्यादीनां यथातथम् ।
विवित्सुभिस्तु विप्रेन्द्रैरद्राक्षं वितथं क्वचित् ॥ १८ ॥
करिष्यमाणमालोच्य द्वैर्यद्वितथमात्मनः ।
तद्भाष्यादिषु गृह्यस्य निमृज्यन्निदमुक्तवान् ॥ १९ ॥
मदीयस्य तु गृह्यस्य भाष्यकृद्वृत्तिकृच्च यः ।
निघण्टुकारिकाकृद्यस्ते चैते चतुरोदिताः ॥ २० ॥

Then again—

वक्ष्यमाणविधानेन वृत्तिकारादिभिर्यथा ।
पत्न्याः प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः ॥ ६४ ॥
आयान्ति काशराक्षस्यो रुधिराशनतत्पराः ।
तासां निरसनार्थाय श्रियमावाहयेत्पतिः ॥ ६५ ॥

(आ. स्मृ. ११. १४-६५).

In the last śloka of the above extract Âśvalâyana speaks of certain rites as to their having been given in detail in the Vṛitti on his Śrautasûtra, which, he had foreseen through his divine sight, would be composed by somebody from among the succeeding generation. But these rites do not appear in the Vṛitti of Gârgya Nârâyaṇa, the only Vṛitti at present supposed to be the oldest.

In the extract given above, mention has been made of Śrautasûtra with its Bhâshya, Gṛihyasûtra with

त्रीणि वर्षाणि शुद्ध्यर्थं ब्रम्हघ्नस्य व्रतं चरेत् ॥
चान्द्रायणानि वा त्रीणि कृच्छ्राणि त्रीणि वा ऽऽचरेत् ॥ ११५ ॥
वैश्यं हत्वा द्विजश्चैवमब्दमेकं व्रतं चरेत् ॥
गवां चैकशतं दद्याच्चरेच्चान्द्रायणानि च ॥ ११६ ॥
कृच्छ्राणि त्रीणि वा कुर्याद्धनाद्विदुषामसौ ॥
ये हन्युरप्रदुष्टां स्त्रीं चातुर्वर्ण्यां द्विजातयः ॥
शूद्रहत्या व्रतं ते तु चरन्तः शुद्धिमाप्नुयुः ॥ ११७ ॥
शूद्रां ये चानुलोम्येन निहत्यव्यभिचारिणीम् ॥
मुनयः शुद्धिमिच्छन्ति चन्द्रव्रतेन केचन ॥ ११८ ॥
व्यभिचारात्तु ते हत्वा योषितो ब्राम्हणादयः ॥
तिलधेनुं बस्तमविं क्रमाद्दद्युर्विशुद्धये ॥ ११९ ॥
साध्वीनां तु नरो हत्वा गवां चैव सहस्त्रकम् ॥[1]
चीर्णेन शुद्धिमाप्नोति योषाहत्याव्रतं चरेत् ॥ १२० ॥
अथ गोघ्नस्य वक्ष्यामि निष्कृतिं श्रोतुमर्हथ ॥
यथा यथा विपत्तिः स्याद्गवां तथोपपद्यते ॥ १२१ ॥
गोघाती पंचगव्याशी गोष्ठशायी च गोनुगः ॥
मासमेकं व्रतं चीर्त्वा गोप्रदानेन शुद्ध्यति ॥ १२२ ॥
एकपादे तु लोमानि द्वये श्मश्रुनिकृन्तनम् ॥
पादत्रये शिखावर्जं सशिखं तु निपातने ॥ १२३ ॥
साशिखं वपनं कृत्वा त्रिसन्ध्यमवगाहनम् ॥
गवां मध्ये वसेद्रात्रौ दिवा गाः समनुव्रजेत् ॥ १२४ ॥
तिष्ठन्तीभिश्च तिष्ठेत व्रजन्तीभिःसह व्रजेत् ॥
पिबन्तीभिः पिबेत्तोयं संविशन्तीभिश्च संविशेत् ॥ १२५ ॥
शृंग-कर्णादिसंयुक्तं चर्मोत्कृत्य तदावृतः ॥
विप्रौकःसु चरेद्भिक्षां स्वकर्म ख्यापयन्व्रती ॥ १२६ ॥
गोघ्नस्य देहि मे भिक्षामिति वाचमुदीरयेत् ॥
मासमेकं व्रतं कृत्वा गोप्रदानेन शुद्ध्यति ॥ १२७ ॥
चौर-व्याघ्रादिकेभ्यश्च सर्वप्राणैः समुद्धरेत् ॥
गर्तप्रपात-पंकाद्य तथान्यादपकारतः ॥ १२८ ॥[2]

---

१. A. and F. read सास्थिनां च भग्नस्थीनां for साध्वीनां तु नरो हत्वा.
२. A. B. D. E. and F. read उपकारतः for अपकारतः.

भोजयेद्ब्राह्मणान्पश्चात्पुष्प धूपादिपूर्वकम् ॥
दद्याद्गां च वृषं चैकं ततः शुद्ध्यति किल्बिषात् ॥ १२९ ॥
मुनयः केचिदिच्छन्ति विचित्रासु विपत्तिषु ॥
यथासम्भवतस्तासु पृथक् पृथक् विनिष्कृतिम् ॥ १३० ॥
शस्त्र-वस्त्राश्म-मृत्पिण्ड-यष्टि-मुष्टि-प्रधावनम् ॥
योक्त्रेण तारणं रोधो बन्धनं विद्युदग्नयः ॥ १३२ ॥
ग्रह-पङ्क-प्रपातश्च बद्धव्याघ्रादिभक्षणम् ॥
क्षुत्तृड्-रोगचिकित्सा च तथाऽतिदोह-वाहने ॥ १३३ ॥
मृत्युस्थानानि चैतानि गवामति प्रधावनम् ॥
प्रब्रूयात्पृथगेतेषु प्रायश्चित्तं पराशरः ॥ १३४ ॥
उपेक्षणं च पङ्कादौ तथोपविषभक्षणे ॥
वक्ष्यमाणक्रमेणैतच्छृणुध्वं द्विजसत्तमाः ॥ १३५ ॥
शस्त्रेण त्रीणि कृच्छ्राणि तदर्धं वा समाचरेत् ॥
अश्मना द्वे चरेत्कृच्छ्रे मृत्पिण्डे नापि कृच्छ्रकम् ॥ १३६ ॥
यष्ट्याघाते चरेत्कृच्छ्रे साक्षान्मुष्ट्या तु तच्चरेत् ॥
योक्त्रेण पादमेकं तु तारणे पादमेव च ॥ १३७ ॥
रोधने कृच्छ्रपादे द्वे कृच्छ्रमेकं तु बन्धने ॥
कूपपाते चरेत्कृच्छ्रमर्धं वाप्यां समाचरेत् ॥ १३८ ॥
गोशकृत्पिण्डघाते च प्राजापत्यं चरेद्द्विजः ॥
क्षुत्तृड्-रोगचिकित्सासु कृच्छ्रमुत्प्रेक्षणे चरेत् ॥ १३९ ॥
पतितां पङ्कलग्नां वा अवलिप्तां च यो नरः ॥
स्वस्य चान्यस्य चोपेक्ष्य सार्धं कृच्छ्रं चरेच्छुचिः ॥ १४० ॥
एका च द्वहुभिर्बद्धा क्ष्वेडिता चेन्म्रियेत गौः ॥
पादं पादं चरेयुस्ते इति पाराशरोऽब्रवीत् ॥ १४१ ॥
सुबद्धां येऽवलिप्ताङ्गां पश्यन्तो नोपकुर्वते ॥
घातनोत्प्रेक्षणं प्रोक्तं चरेयुस्ते व्रतं नराः ॥ १४२ ॥
या गर्तादौ विपद्येत क्ष्वेडिता सम्प्रपत्य वा ॥
पादे क्ष्वेडितयोरुक्तं तत्कर्ता व्रतमाचरेत् ॥ १४३ ॥

---

१. A. reads °कुड्य° for °पंक°. २. A. reads अतिप्रधातनम् for अति प्रधावनम्. ३. A. reads शास्त्रेण for शस्त्रेण. ४. B. reads अवलुप्ताङ्गां for अवलिप्ताङ्गां ५. A. reads पाते for पादे.

प्रबद्धा रज्जुदोषेण गौर्विपद्येत यस्य सा ॥
व्रतपादं [illegible] किंचिद्दद्याच्च दक्षिणाम् ॥ १४४ ॥
योगाममपालयन् दुःखादति वा घातयेद्वृषम् ॥
यदि म्रियेत तद्दोषात्स्वा कृच्छ्रार्द्धमाचरेत् ॥ १४५ ॥
घासं यो न क्षुधार्तस्य तृषार्त्तस्य न वा जलम् ॥
स्वीकृतस्य न चेद्दद्यात्स तत्पादव्रतं चरेत् ॥ १४६ ॥
या तु बद्धा चिकित्सार्थं विशल्यकरणाय च ॥
औषधादिप्रदानाय विपत्तौ नास्ति पातकम् ॥ १४७ ॥
विद्युत्पातादि-दाहाभ्यां कुण्डस्य पतनादिभिः ॥
गोभिर्विपत्तिमापन्नैस्तत्र दोषो न विद्यते ॥ १४८ ॥
पालयन्पश्यतोऽरण्ये गौस्तु व्याघ्रादिभिर्हता ॥
अकुर्वतः प्रतीकारं कृच्छ्रार्धं तस्य पावनम् ॥ १४९ ॥
शृण्वन् शून्येषु पालेषु तथान्यारण्यगामिषु ॥
पाले संभाषयत्युर्वीं हन्यात्तत्र न दोषभाक् ॥ १५० ॥
गर्भिणी गर्भशल्या तु तद्गर्भं तु विशल्यतः ॥
यत्नतो गौर्विपद्येत तत्र दोषो न विद्यते ॥ १५१ ॥
गर्भस्य पातने पादं द्वौ पादौ गात्रसंभवे ॥
पादोनं व्रतमाचर्ष्ट हत्वा गर्भमचेतनम् ॥ १५२ ॥
अङ्ग-प्रत्यंगभूतेन तद्गर्भे चेतनान्विते ॥
द्विगुणं गोव्रतं कुर्यादेषा गोघ्नस्य निष्कृतिः ॥ १५३ ॥
वस्त्राद्युत्त्रासने गौश्च गलदामकदोषतः ॥
पादयोर्बंधने चैव पादोनं व्रतमाचरेत् ॥ १५४ ॥
घण्टाभरणदोषेण गौश्चेद्वधमवाप्नुयात् ॥
चरेदर्धं व्रतं तत्र भूषणार्थं च यत्कृतम् ॥ १५५ ॥
गोविपत्ति-वधाशङ्की कुर्याद्यो नैव निष्कृतिम् ॥
सतद्गोरोमतुल्यानि नरकाण्याविशेत्समाः ॥ १५६ ॥

---

१. A. reads दुःखात् for दुखात्. २. A. reads [illegible] instead of बंधमवाप्नुयात्. ३. A. B. D. E. and F. read °विपत्तौ वधाशंकी for °विपत्तिवधाशंकी. ४. A. reads °तुल्या वै for °तुल्यानि.

यःस्नात्वा पापकर्मीतो विप्राराधनतत्परः ॥
तद्वत्तां निष्कृतिं कुर्याद्व्रतैनाः सोऽश्नुते शुभम् ॥ १५७ ॥
अन्यत्प्राणिवधस्याथ प्रवक्ष्यामि विशोधनम् ॥
गजादिवधशुद्ध्यर्थं यद्व्रतं या च दक्षिणा ॥ १५८ ॥
हस्तिनं तुरगं हत्वा वृषभं खरमेव च ॥
वृषार्थं धां शतगुणं वृषं दद्याद्यथाक्रमम् ॥ १५९ ॥
क्षणाद्गोनिष्क्रयं कृत्वा परगोवधकृन्नरः ॥
तस्याथ निष्कृतिं कुर्याद्वधशुद्धिमपेक्षया ॥ १६० ॥
हंसं श्येनं कपिं गृध्रं जल-स्थलशिखण्डिनम् ॥
भासं च हत्वा स्युर्गावः शुद्ध्यै देयाः पृथक् पृथक् ॥ १६१ ॥
हंस-सारस-चक्राह्व-मयूर-मद्गु-कुक्कुटान् ॥
आटी-पारावत-क्रौंच-शुकहा नक्तभोजनात् ॥ १६२ ॥
मेषा-ऽजघ्नो वृषं दद्यात्प्रत्येकं शुद्धये द्विजः ॥
मनीषिणो वदन्त्येनां प्राणिनां वधनिष्कृतिम् ॥ १६३ ॥
क्रौंच-सारस-हंसादिशिखि-सारसकुक्कुटान् ॥
शुक-टिट्टिभसंघघ्नो नक्ताशी बकहा शुचिः ॥ १६४ ॥
पारावत-कपोतघ्नः सारि-तित्तिर-चाषहा ॥
त्रिसंध्यांतर्जले प्राणानायम्य स्याच्छुचिर्द्विजः ॥ १६५ ॥
काकं गृध्रं च श्येनं च अन्यं क्रव्यादपक्षिणम् ॥
हत्वा स्यादुपवासेन शुद्धिमाह पराशरः ॥ १६६ ॥
मार्जारं मूषकं सर्पं हत्वाऽजगर-डिण्डिभौ ॥
शर्कराभोजनं दण्डमायसं च ददन् शुचिः ॥ १६७ ॥
मेषं च शशकं गोधां हत्वा कूर्मं च शल्लकम् ॥
वार्ताकं गृंजनं जग्ध्वा ऽहोरात्रोपोषणाच्छुचिः ॥ १६८ ॥
वृकं च जंबुकं हत्वा तरक्षर्क्षौ तथा द्विजः ॥
त्रिरात्रोपोषितः शुद्ध्येत्तिलप्रस्थप्रदानतः ॥ १६९ ॥

---

१. A. reads उक्तां च for तद्वत्तां २. A reads करभं for वृषभं. ३. F. reads वृकान् for वृषान्. ४, A. श्वांशुकं गुंजां, C. too the same, while F. reads पंचांशुकं गुंजां. ५. A. reads नृणां for क्षणात् and B. कृणात्. ६. A. reads दत्वा for कृत्वा, F. too the same. ७. B. E. and F. read पिक° for हंस°. ८. F. reads °मद्गुघ्नः for °संघघ्नः ९. A.reads ऽयहात् for बकहा. १० A. B. D. E. and F. read कृशरा° for शर्करा°. ११. A reads this whole line as— त्रिरात्रस्यैकोपवासेन शुद्धः स्याद्द्विजपूजनात्.

21

द्विजः शाखामृगं हत्वा सिंहं चित्रकमेव च ॥
कृत्वा सप्तोपवासान्स दद्याद्ब्राह्मणभोजनम् ॥ १७० ॥
महिषोष्ट्रगजाऽश्वानां हत्वा चान्यतमं द्विजः ॥
त्रिः स्नात्वा चोपवासेन शुद्धः स्याद्द्विजपूजनात् ॥ १७१ ॥
वराहं यदि वा रोहं हत्वा मृगमकामतः ॥
अफालकृष्टभोजी सन् नक्तेनैकेन शुद्ध्यति ॥ १७२ ॥
अथान्यत्सम्प्रवक्ष्यामि अस्पृश्यस्पर्शनादिषु ॥
अभक्ष्यभक्षणादौ च निष्कृतिं श्रोतुमर्हथ ॥ १७३ ॥
उदक्या ब्राह्मणी स्पृष्टा मातंगपतितेन च ॥
चान्द्रायणेन शुद्ध्येत द्विजानां भोजनेन च ॥ १७४ ॥
कापालिकादिकां नारीं गत्वाऽगम्यां तथा पराम् ॥
भुक्त्वा विप्रस्तद्दिनं स्याच्छुद्धिःचंद्रव्रतेन तु ॥ १७५ ॥
कामतस्तु द्विजः कुर्यादुक्तस्त्रीगमनं यदि ॥
चंद्रव्रतद्वयं शुध्यै प्राह पाराशरो मुनिः ॥ १७६ ॥
दुग्धं सलवणं सक्तून् सदुग्धान्निशि सामिषान् ॥
दन्तच्छिन्नान्सकृद्दंतान्पृथक् पीतजलानि च ॥ १७७ ॥
योऽद्यादुच्छिष्टमाज्यं तु पीतशेषं जलं पिबेत् ॥
एकैकशो विशुद्ध्यर्थं विप्रः चंद्रव्रतं चरेत् ॥ १७८ ॥
वासांसि धावतो यत्र पतन्ति जलबिन्दवः ॥
तदपुण्यं जलस्थानं नरकस्य शिलान्तिकम् ॥ १७९ ॥
तत्र पीत्वा जलं विप्रः श्रान्तस्तृट्परिपीडितः
तदेनसो विशुद्ध्यर्थं कुर्याच्चान्द्रायणं व्रतम् ॥ १८० ॥
नटीं शैलूषिकीं चैव रजकीं वेणुवादिनीम् ॥
गत्वा चांद्रायणं कुर्यात्तथा चर्मोपजीविनीम् ॥ १८१ ॥
गां नृपं चैव वैश्यं च शूद्रं वाप्यनुलोमजम् ॥
क्षत्रियादिस्त्रियं गत्वा विप्रश्चांद्रायणं चरेत् ॥ १८२ ॥
ब्राह्मणान्नं ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददन् ॥
द्वावप्येतावभोज्यान्नौ चरेतां शशिनो व्रतम् ॥ १८३ ॥

---

१. F. reads °भोजनात् for °पूजनात्. २. B. reads पतितेनांत्यजेन वा, E. and F. also read the same. ३. B. reads यस्य for यत्र, E. and F. also the same. ४. A. B. E. and F. read शिलांकितम् for शिलांतिकम्. ५. A. B. E. and F. read शांतः for श्रांतः. ६. A. reads °जीविनीम् for °वादिनीम्. ७. ८. In both places B. D. E. and F. read ददत् for ददन्.

विप्रेणामंत्रितोऽविप्रः शूद्राहूतश्च योऽश्नुते ॥
आमंत्रयितृ-भोक्तारौ शुद्ध्येतामैन्दवेन तु ॥ १८६ ॥
समानार्षी च यो गच्छेन्मात्रा सह सगोत्रजाम् ॥
मातुलस्य सुतां चैव विप्रश्चान्द्रायणं चरेत् ॥
पीतशेषं जलं पीत्वा भुक्तशेषं तथा घृतम् ॥
कृत्वा मूत्र-पुरीषे तु द्विजश्चान्द्रायणं चरेत् ॥ १८७ ॥
सूनिहस्ताच्च गोमांसमस्वामद्यमकामतः ॥
पीत्वा चंद्रव्रतं कुर्यात्पावनं शुद्धिदं परम् ॥ १८८ ॥
साग्निः सन्पंचयज्ञान्यो न कुर्वीत द्विजाधमः ॥
परपाकरतो नित्यं आत्मपाकविवर्जितः ॥ १८९ ॥
अदाता च सदा लुब्धः श्वपचः परिकीर्तितः ॥
यो द्विजोऽस्यान्नमश्नाति स कुर्यादैन्दवं व्रतम् ॥ १९० ॥
गणिका-गणयोरन्नं यदन्नं बहुयाजकम्[1] ॥
सीमन्तोन्नयने भुक्त्वा द्विजश्चांद्रायणं चरेत् ॥ १९१ ॥
अजानन् सम्यगश्नीयात्पुत्रजन्मनि यो द्विजः ॥
सोऽभक्ष्यसममश्नाति[3] द्विजश्चांद्रायणं चरेत् ॥ १९२ ॥
महापातकिनामन्नं योऽद्यादज्ञानतो द्विजः ॥
अज्ञानात्तप्तकृच्छ्रं तु ज्ञानाच्चांद्रायणं चरेत् ॥ १९३ ॥
प्रपात-विष-वह्न्यम्बु-प्रव्रज्योद्बन्धनाशकात् ॥
च्युतो हतश्च हंता च प्रत्यवासनिकाः स्मृताः ॥ १९४ ॥
केचिदेतद्विशुद्ध्यर्थमिच्छन्ति व्रतमैन्दवम् ॥
दक्षिणां सवृषां गां च दद्युश्च द्विजभोजनम् ॥ १९५ ॥
गृहद्वारेऽतिथौ प्राप्ते तस्यादत्वा समश्नुते ॥
अभोज्यमशनं तच्च भुक्त्वा चांद्रायणं चरेत् ॥ १९६ ॥
सव्यहस्तस्थिते दर्भे यो द्विजः समुपस्पृशेद्[4] ॥
असृक्पानेन तुल्यं च पीत्वा चान्द्रायणं चरेत् ॥ १९७ ॥
भुक्त्वा शय्यागतः पीत्वा विप्रश्चांद्रायणं चरेत् ॥
अभक्ष्येण समं तद्धि प्रायश्चित्तं समं भवेत् ॥ १९८ ॥

---

१. B. E. and F. read °याचकम् for °याजकम्. २. These three verses are not given in A. ३. A. reads योऽभक्ष्यं च समश्नाति for सोऽभक्ष्यसममश्नाति. ४. B. D. E. and F. read समुपासते for समुपस्पृशेत्.

आसनारूढपादः सन्वक्षस्याधमधः कृतम् ॥
धरामुखेन यो भुंक्ते द्विजश्चांद्रायणं चरेत् ॥ १९९ ॥
उद्धृत्य वामहस्तेन यत्किंचित्पिबते द्विजः ॥
सुरापानेन तत्तुल्यं पीत्वा चांद्रायणं चरेत् ॥ २०० ॥
स्पृष्टेन तेन संज्ञायाद्यदि तच्छूतमश्नुते ॥
चरन् चांद्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि वा द्विजः ॥
अभीयाद्येन स्पृष्टेन उच्छिष्टं चाश्नुते हि सः ॥
चरेच्चांद्रायणं शुद्ध्यै त्रीणि कृच्छ्राणि च द्विजः ॥ २०१ ॥
चांद्रायणं नवश्राद्धे पाराको मासिके मतः ॥
न्यूनाब्दे पादकृच्छ्रं स्यादेकाहः पुनराब्दिके ॥ २०२ ॥
स्नानमन्येषु कुर्वीत प्राणायामं जपं तथा ॥
यःस्वैरिणीनां च पुनर्भुवां च यः कामचारिद्विजयोषितां च ॥
रेतोधृतां पाकमनाय दद्याद्विप्रः स चंद्रव्रतकृच्छ्रशुचिः स्यात् ॥
वेश्मन्यज्ञातचांडालो द्विजातेर्यदि तिष्ठति ॥
ब्रह्मकूर्चं चरेन्मासं त्रिः स्नायी नियतेन्द्रियः ॥ २०३ ॥
स्नेहांश्च घृततैलादीन्वस्त्राणि चासनानि च ॥
बहिः कृत्वा दहेद्गेहं संशुद्धो भोजयेद्द्विजान् ॥ २०५ ॥
गोविंशतिं वृषं चैकं तेभ्यो दद्याच्च दक्षिणाम् ॥
इमं च निष्क्रयं ब्रूयुः केऽपि[1] चांद्रायणत्रयम् ॥ २०६ ॥
अल्पपापस्य[2] शुद्ध्यर्थं चरेत्सांतपनं[3] व्रतम् ॥
इमं च निष्क्रयं दद्यादित्येके मुनयो विदुः ॥ २०७ ॥
महापातक शुध्यर्थं सर्वा निष्कृतयो[4] नरैः ॥
नृप-ग्रामेशविदितैः कुर्वाणैः शुद्धिराप्यते ॥ २०८ ॥
सुरा-मूत्र-पुरीषाणां लोढा त्वेकमकामतः ॥
पुनः संस्कारकरणाच्छुद्ध्येदाह पराशरः ॥ २०९ ॥
अभक्ष्यभक्षणो विप्रस्तथैवापेयपानकृत् ॥
व्रतमन्यत्प्रकुर्वीत वदन्त्यन्ये द्विजोत्तमाः ॥ २१० ॥
कुशा-ऽब्जा-ऽश्वत्थ-पालाश-बिल्वोदुम्बरवारिणा ॥
पीतेन जायते शुद्धिः षड्रात्रेण न संशयः ॥ २११ ॥

---

१. A. reads चांद्रायणं च कौपान for केऽपि चांद्रायणत्रयम्. २. B. D. E. and F. read अस्य for अल्प°. ३. A. reads °वा ह्यैन्दवं for सांतपनं. ४. A. B. D. E. and F. read सर्वनिष्कृतये for सर्वा निष्कृतयो.

द्रोण्यम्बुशीर-कुम्भाभः अस्पृष्टं कोशवारि च ॥
पीत्वारण्ये प्रपातोऽयं पंचगव्यं पिबञ्छुचिः ॥ २१२ ॥
भाण्डस्थितमभोज्यान्नं पयो-दधि-घृतं पिबन् ॥
द्विजातेरुपवासः स्याच्छूद्रो दानेन शुध्यति ॥ २१३ ॥
तत्तोयपीतजीर्णांगः तप्तकृच्छ्रं चरेद्द्विजः ॥
वांते तु तज्जले सद्यः प्राजापत्यं समाचरेत् ॥ २१४ ॥
रजकाद्यम्बुपानेन प्राजापत्यं बुधैःस्मृतम् ॥
वान्ते जले तदर्धं तु शूद्रः स्यात्पादकृच्छ्रकृत् ॥ २१५ ॥
चाण्डालकूपपानेन महदेनः प्रजायते ॥
गोमूत्रयावकाहाराः शुद्ध्येयुर्दिवसैस्त्रिभिः ॥ २१६ ॥
घृतं दधि तथा दुग्धं गोष्ठे वाऽशौचसूतके ॥
अभिचारस्य तद्भुक्त्वा भुक्त्वा वा शूद्रभोजनम् ॥ २१७ ॥
द्रुपदां वा द्विजो जप्त्वा मानस्तोकमथापि वा ॥
क्षुधार्तिपीडितः पश्चादिति प्राह पराशरः ॥ २१८ ॥
सूतकान्नं द्विजो भुक्त्वा त्रिरात्रोपोषणाच्छुचिः ॥
तोयपाने त्वसौ कुर्यात्पंचगव्यस्य चाशनम् ॥ २१९ ॥
द्रोणाढकं तदर्धं वा प्रस्थं प्रस्थार्धमेव वा ॥
घृतमुच्छिष्टसंस्पृष्टं प्रोक्षणाच्छुचितामियात् ॥ २२० ॥
चरुपक्वं शृतं पक्वं अन्नं काकाद्युपाहतम् ॥
तद्ग्रासस्थानसंत्यागात्पूतं हेमाम्बुसिंचनात् ॥ २२१ ॥
केचिद्वदन्ति तज्ज्ञास्तु तस्याग्निमावचूडनम् ॥
केचित्प्रणवयुक्तेन वारिणा प्रोक्षणं विदुः ॥ २२२ ॥
केश-कीटकसंदुष्टं अन्नं मक्षिकयापि च ॥
मृद्भस्मवारिणा तत्र क्षेप्तव्यं शुद्धिकारणम् ॥ २२३ ॥
उदक्या ब्राह्मणी स्पृष्टा क्षत्रिण्यापि ह्युदक्यया ॥
अर्धकृच्छ्रं चरेत्पूर्वा तदर्धमपरा चरेत् ॥ २२४ ॥
प्राजापत्यं विशःपत्या विट्पत्नी पादमाचरेत् ॥
शूद्रास्पृष्टा चरेत्कृच्छ्रं शूद्री दानेन शुद्ध्यति ॥ २२५ ॥
ब्राह्मण्या ब्राह्मणी स्पृष्टा उदक्योदक्यया च ते ॥
चरेतां पादकृच्छ्रे द्वे कृते स्नाने विशुद्ध्यति ॥ २२६ ॥

---

१. B. reads °क्षीर° for °शीर°. २. B. reads कुश° for केश°.

ब्राह्मणी क्षत्रियां स्पृष्ट्वा ब्राह्मणीव्रतमाचरेत् ॥
अपरा क्षत्रियायास्तु वक्तव्यमेवमन्ययोः ॥ २२७ ॥
रजस्वला तु संस्पृष्टा श्व-विट्-शूद्रैश्च वायसैः ॥
स्नानं यावन्निराहारं पंचगव्येन शुद्ध्यति ॥ २२८ ॥
उदक्या ब्राह्मणी स्पृष्टा मद्यमातंग-भिल्लकैः ॥
गोमूत्रयावकाहारा षड्रात्रेण च शुद्ध्यति ॥ २२९ ॥
उच्छिष्टो ब्राह्मणः स्पृष्ट्वा द्विजातिस्त्री रजस्वलाम् ॥
प्राजापत्येन संशुद्ध्येच्चीर्णकृच्छ्रेण वा पुनः ॥ २३० ॥
वदन्ति कवयः केचिदेतद्दोषविशुद्धये ॥
प्राणायामशतं चास्य पंचगव्यस्य भक्षणात् ॥ २३१ ॥
उच्छिष्टो ब्राह्मणः स्पृष्टो ब्राह्मण्युदक्यया चरेत् ॥
प्राजापत्यं च गायत्रीमयुतं नियतं सकृत् ॥ २३२ ॥
क्षत्रिण्यादिभिरुच्छिष्टैः संस्पृष्टो व्रतमाचरेत् ॥
अनुच्छिष्टस्तु तत्स्पर्शे स्नानकर्म यतः स्मृतम् ॥ २३३ ॥
रजकादिकसंस्पर्शे द्विजन्मोदक्ययोषितः ॥
प्राजापत्यं चरेद्विप्रा अन्याश्चरेयुरंशतः ॥ २३४ ॥
उदक्यां ब्राह्मणीं गत्वा क्षत्रियो वैश्य एव च ॥
त्रिरात्रोपोषितः प्राश्य गव्यमाज्यं शुचिर्भवेत् ॥ २३५ ॥
क्षत्रिणीं चैव वैश्यां च जानन् गत्वा तु कामतः ॥
चरेत्सांतपनं विप्रस्तत्पापस्य विमोक्षकृत् ॥ २३६ ॥
वैश्यां च क्षत्रियो गत्वा वैश्यश्च शूद्रिणीं तथा ॥
प्राजापत्यं चरेतां ताविति प्राह पराशरः ॥ २३७ ॥
उच्छिष्टा ब्राम्हणी स्पृष्टा शुना वा वृषलेन वा ॥
अशुद्धा वा भवेत्तावद्यावत्तस्यादुपोषणम् ॥
शुद्धा भवति सा तावद्यावत्पश्यति शीतगुम् ॥ २३८ ॥
विप्रोष्य स्वजनीं वेश्यां महिष्युष्ट्रीमजां खरीम् ॥
प्राजापत्यं चरेद्गत्वा ह्येकैकस्य विशुद्धये ॥ २३९ ॥
शूद्रीं तु ब्राम्हणो गत्वा मासं मासार्धमेव वा ॥
गोमूत्रयावकाहारो मासार्धेन विशुद्ध्यति ॥ २४० ॥
नृपोऽप्यस्वजनां गत्वा प्राजापत्यं समाचरेत् ॥
वैश्यपत्नीमसौ गत्वा कृत्वा सांतपनं शुचिः ॥ २४१ ॥

---

१. B. reads जपेत्स्नानं त्रिकालकृत् for अयुतं नियतं सकृत्.

शूद्रीं तु क्षत्रियो गत्वा गोमूत्रयावकाशनः ॥
दशभिर्दिवसैः शुद्ध्येद्वैश्यःसोऽप्येवमेव हि ॥ २४२ ॥

उत्तमागमनेऽनार्याः[१] सर्वे ते स्युः कराग्निना ॥
महापथं च संप्राज्याः खरयानेन योषितः ॥ २४३ ॥

चाण्डालीमेव भिल्लानामभिगम्य सकृत्स्त्रियम् ॥
चाण्डाल-मेद-भिल्लानामभिगम्य स्त्रियं नरः ॥
शुद्ध्यै पयोव्रतं कुर्यान्मासार्धमघमर्षणम् ॥ २४४ ॥

पतितां च द्विजाभ्यर्च्यां प्राजापत्यं चरेद्द्विजः ॥
तैलिकस्य स्त्रियं गत्वा तथा मद्यकृतःस्त्रियम् ॥ २४५ ॥

अज्ञानाभिगतौ स्त्रीणां पुंसामनुलोमजस्य च ॥
इमां निष्कृतिमिच्छन्ति घृतयोनिं च केचन ॥ २४६ ॥

पितृव्य-भ्रातृजायां च मातृष्वसारमेव च ॥
भगिनीं चैव धात्रीं च गत्वा कृच्छ्रं समाचरेत् ॥ २४७ ॥

षण्मासान् केचिदिच्छन्ति संगम्यैता विशुद्धये ॥
कृच्छ्रं धर्मविदो विप्राः शुद्धिं तत्वार्थवेदिनः ॥ २४८ ॥

गुरुपत्नीं द्विजो गत्वा मातृष्वसृ-दुहितृषु ॥
क्षिपेच्छुध्यर्थमात्मानं सुसमिद्धे-हुताशने ॥ २४९ ॥

उपाध्याय-नृपा-ऽऽचार्य-शिष्य-योषिद्गमी नरः ॥
षण्मासान्कृच्छ्रचरणाच्छुद्धिमाह पराशरः ॥ २५० ॥

कृतचाण्डालसंस्पर्शः शकृन्मूत्रकरो द्विजः ॥
षड्रात्रोपोषणाच्छुद्ध्येद्भुक्त्वा ऽऽस्नान्तो नवद्युभिः ॥ २५१ ॥

ऊर्ध्वोच्छिष्टस्य संशुद्ध्यै केचित्प्रजापतिव्रतम् ॥
पराकं पञ्चगव्यं च केचिदाहुर्मनोषिणः ॥ २५२ ॥

उच्छिष्टो ब्राम्हणः स्पृष्ट उच्छिष्टेन द्विजेन तु ॥
आचम्यैव तु शुध्येतां विष्णुनामानुकीर्तनात् ॥ २५३ ॥

क्षत्रियेण तु संस्पृष्टो ब्राह्मणो नक्तभोजनात् ॥
वैश्येन चैव संस्पृष्टो नक्ताशी पंचगव्यपः ॥ २५४ ॥

शूद्रेण तु च संस्पृष्टो एकरात्रोपवासकृत् ॥
उच्छिष्टैः पुनरेतैस्तु प्रोक्तं द्विगुणमर्हति ॥ २५५ ॥

---

१. F. reads दाद्याः for ऽनार्याः.

उच्छिष्टः शूद्रसंस्पृष्टः शुना वापि द्विजोत्तमः ॥
उपोष्य पंचगव्येन शुद्धिः स्यादपरे विदुः ॥ २५६ ॥
अनुच्छिष्टोऽपि यत्स्पर्शात्स्नाति वर्णो विशुद्धये ॥
उच्छिष्टः तस्य संस्पर्शे चरेत्प्राजापतिव्रतम् ॥ २५७ ॥
रजकाद्यन्त्यजैः स्पृष्टः शूद्रोऽस्यार्धमाचरन् ॥
उदक्या ब्राह्मणी कृच्छ्रात्प्राजापत्यादथापरे ॥ २५८ ॥
उदक्या ब्राह्मणी स्पृष्टा शुना वा वृषलेन वा ॥
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुद्ध्यति ॥ २५९ ॥
उदक्या सूतिका-म्लेच्छसंस्पर्शेऽस्तमिते रवौ ॥
दिवाहृताम्भुना स्नात्वा शुद्ध्येद्विप्राग्निसन्निधौ ॥ २६० ॥
वदन्त्यपां पवित्रत्वं दिवा सूर्यांशु-मारुतैः ।
वन्दयित्वा पवित्रत्वं मन्दार्करश्मि-वायुभिः ॥
मुनयो धर्मवेत्तारो रात्रौ चंद्रांशु-रश्मिभिः ॥ २६१ ॥
सकृच्च ब्राह्मणः प्राश्य षडहं पंचगव्यकम् ॥
हेम्नो दद्याच्च षण्मासान्दत्वा गां च विशुध्यति ॥ २६२ ॥
पंचाहेन नृपः शुद्ध्येत्पंचमासान्ददच्च गाः ॥
चतुर्भिर्दिवसैर्वैश्यश्चतुर्मासान् गवा सह ॥ २६३ ॥
त्र्यहेण तु चतुर्थस्तु दद्यन्मासत्रयं च गाम् ॥
सकृत्स्पर्शाद्भवेच्छुद्ध एतदाह पराशरः ॥ २६४ ॥
रक्तं निःसार्य विप्रस्य कामतोऽकामतोऽपि वा ॥
गायत्र्यष्टसहस्रेण जपेन तु भवेच्छुचिः ॥ २६५ ॥
यो यस्य हरते भूमिं हेम गामश्वमेव वा ॥
स तं यत्नात्प्रसाद्यापि तदुक्तः शुद्धिमाप्नुयात् ॥ २६६ ॥
आख्याय भूभृते वापि तेन संशोधितः शुचिः ॥
द्रव्यदण्डाद्विमुक्तिर्वा तपसा वा शुचिर्नरः ॥ २६७ ॥
निराहाराज्जायते च एतदाहुर्मनीषिणः ॥
विनिर्गता यदा शूद्रादुक्यान्ते व्यवस्थिताः ॥ २६८ ॥

---

१. A. reads एकरात्रोपवासेन for उपोष्य पंचगव्येन, B. D. E. and F. also read the same. २. Except B. read °माषान् for °मासान्. ३. A. C. and F. read हेममाषत्रयं for दद्यन्मासत्रयं. ४. A. only reads सकृद्दहनान्मुच्येत for सकृत्स्पर्शाद्भवेच्छुद्धः. ५. These 5 lines are not given in B. D. E. and F.

तदा द्विजैस्तु द्रष्टव्य इतिधर्मविदो विदुः ॥
दुःस्वप्नदर्शने चैव वान्ते वा क्षुरकर्मणि ॥
मैथुने कटधूमे च सद्यः स्नानं विधीयते ॥ २६९ ॥
चितां च चितिकाष्ठं च यूपं चण्डालमेव च ॥
स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ॥ २७० ॥
श्व-जंबुक-वृकाद्यैश्च यदि दष्टो भवेन्नरः ॥
सचैलो जलमाविश्य दत्वाज्यं शुद्धिमर्हति ॥ २७१ ॥
शुनो घ्राणावलीढस्य नखैर्विलिखितस्य च ॥
यतीनां दर्शनं कार्यमग्निना चोपचूलनम् ॥ २७२ ॥
अवज्ञां तु गुरोः कृत्वा नक्तं तस्य च भोजनम् ॥
नक्षत्रदर्शनं त्वन्य इति प्राह पराशरः ॥ २७३ ॥
कुमारी तु शुना स्पृष्टा जम्बुकेन वृकेण वा ॥
यां दिशं व्रजते सूर्यस्तां दिशं सा विलोकयेत् ॥ २७४ ॥
दिवसे तु यदा ग्रामे शुना स्पृष्टो भवेद्द्विजः ॥
विप्रं प्रदक्षिणीकृत्य घृतं प्राश्य विशुध्यति ॥ २७५ ॥
चातुर्वर्ण्यात्तु या नारी कृताभिगमनापि च ॥
प्रक्षाल्य नाभितो ऽधस्तादाचान्तस्तु शुचिर्नरः ॥ २७६ ॥
विप्रे मैथुनिनि स्नानं केचिदाहुश्शिरोविना ॥
नाभिं यावत् विशस्तद्वल्लिंगशौचोऽन्त्यजः शुचिः ॥ २७७ ॥
अभिगच्छन्सुतार्थं च ऋतावृत्तौ स्त्रियं द्विजः ॥
न च कुर्वीत स स्नानं नाभेरधस्तु शोधयेत् ॥ २७८ ॥
त्वङ्कारं तु गुरोः कृत्वा हुंकारं तु गरीयसः ॥
प्रसाद्यैतावनश्नन्स्यात्स्नात्वा शुद्धो द्विजोत्तमः ॥ २७९ ॥
विवादे शास्त्रतो जित्वा जयो यस्य न जायते ॥
श्मशाने जायते तस्य तमोभावेन दुष्कृतम् ॥ २८० ॥

---

१. B. D. E. and F. read तिला वसूनि काष्ठानि अंत्यजस्यापि वेश्मनः for the given line in the original. २. A. reads अद्भिः प्रक्षालनं for यतीनां दर्शनं. ३. A. B. D. E. and F., read दृष्टा for स्पृष्टा. ४. A. reads चतुर्वर्णा-शुचिर्नारी and B. reads चातुर्वर्ण्यशुचिर्नारी, D. E. and F. also read the same as B. ५. A. reads लिंगशौचांतिकं for लिंगशौचोऽन्त्यजः. ६. A. reads अवश्यं for अनश्नन्. ७. A. reads भयं for जयो.

ताडयित्वा तृणेनापि स्कन्धे घाऽऽबध्य रज्जुना ॥
कलहादपि निर्जित्य तं प्रसाद्य विशुद्ध्यति ॥ २८१ ॥
अवगूर्य चरेत् कृच्छ्रमतिकृच्छ्रं निपातने ॥
कृच्छ्रातिकृच्छ्रोऽसृक्पाते कृच्छ्रोऽस्यान्तरशोणिते ॥ २८२ ॥
प्रेतमूढ्वा च दग्ध्वा च शुद्धिः स्नानाद्विजन्मनाम् ॥
उपवासेन चैकेन ब्रह्मकूर्चं च पावनम् ॥ २८३ ॥
प्रेतीभूतं च यः शूद्रं ब्राम्हणो ज्ञानदुर्बलः ॥
अनुगच्छेन्नीयमानं त्रिरात्रमशुचिर्भवेत् ॥ २८४ ॥
त्रिरात्रे तु ततः पूर्णे नदीं गत्वा समुद्रगाम् ॥
प्राणायामशतं कृत्वा घृतं प्राश्य विशुद्ध्यति ॥ २८५ ॥
अंगुल्या दन्तकाष्ठं च प्रत्यक्षलवणं तथा ॥
मृत्तिकाभक्षणं चैव तुल्यं गोमांसभक्षणम् ॥ २८६ ॥
कृत्वाऽन्यतममेतेषां शुद्ध्यर्थमात्मनो हितम् ॥
चरेच्छशिव्रतं विप्र इति प्राहुर्मनीषिणः ॥ २८७ ॥
केचिद्वदन्ति मुनयः कृच्छ्रं सांतपनं तथा ॥
तदर्द्धं पादकृच्छ्रं वा प्राहुरन्ये द्विजोत्तमाः ॥ २८८ ॥
अर्धोच्छिष्टो द्विजोऽज्ञानाद्यात्यघं नहि किंचन ॥
भुक्त्वाऽनाचम्य वा कुर्याद्विण्मूत्रं केह निष्कृतिः? ॥ २८९ ॥
नक्तोपवासी बाह्ये तु अन्यत्र द्विगुणं चरेत् ॥
अष्टोत्तरशतं जप्त्वा गायत्र्याः शुद्धिमर्हति ॥ २९० ॥
अर्धोच्छिष्टो द्विजः स्पृष्टः शुना वा वृषलेन वा ॥
नक्षत्रदर्शनेऽश्नीयात्पंचगव्यपुरस्सरम् ॥ २९१ ॥
अर्धोच्छिष्टाश्च विप्राद्याः श्वोच्छिष्टैः शूद्रसंस्पृशः ॥
उपवासेन शुद्ध्येयुः पंचगव्यस्य पानतः ॥ २९२ ॥
श्व-काकी-काकसंस्पृष्टो भुञ्जानो ब्राह्मणश्च यः ॥
तदन्नस्य परित्यागं कृत्वा स्नानेन शुद्ध्यति ॥ २९३ ॥
विना यज्ञोपवीतेन भोजनं कुरुते यदि ॥
अथ मूत्र-पुरीषे वा रेतःसेचनमेव वा ॥ २९४ ॥
त्रिरात्रोपोषितो विप्रः पादकृच्छ्रं तु भूमिपः ॥
अहोरात्रोषितो वैश्यः शुद्धिरेषा पुरातनी ॥ २९५ ॥

---

१. A. reads विवादेनापि for कलहादपि

विप्रः क्षुत्कृत्य निष्ठीव्य कृत्वा चानृतभाषणम् ॥
वचनं पतितैःकृत्वा दक्षिणं श्रवणं स्पृशेत् ॥ २९६ ॥
विप्रस्य दक्षिणे कर्णे नित्यं वसति पावकः ॥
अंगुष्टे दक्षिणे पाणौ तस्मात्तेन च स स्पृशेत् ॥ २९७ ॥
प्रेक्षणं शशिनोऽर्कस्य ब्रह्मेश-विष्णुसंस्मृतिम् ॥
गायत्र्याः शत-साहस्रं सर्वपापहरं स्मृतम् ॥ २९८ ॥
गायत्र्यष्टसहस्रं तु ब्रह्महत्याविशोधनम् ॥
शूद्रवधे द्विजाग्र्यस्य गायत्र्यष्टसहस्रकम् ॥ २९९ ॥
राज्ञः पंचसहस्रं तु स्याद्विशश्च तदर्धकम् ॥
योगेन गतेशीलस्तु यदि वा स्यात्सदा नरः ॥ ३०० ॥
विप्रश्च सम्मताचारस्तावुभौ सर्वदा शुची ॥
मक्षिका सन्ततिर्धारा विप्रुषो ब्रह्मविन्दवः ॥
स्त्रीमुखं बाल-वृद्धौ च न दुष्यन्ति कदाचन ॥ ३०१ ॥
आत्मस्त्रीह्यात्मबालश्च आत्मवृद्धस्तथैव च ॥
आत्मनः शुचयः सर्वे परेषामशुचीनि तु ॥ ३०२ ॥
उत्पन्नमातुरे स्नानं दशकृत्वस्त्वनातुरः ॥
स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥ ३०३ ॥
विवाहोत्सव-यज्ञेषु संग्रामे जलसंप्लवे ॥
पलायने तथारण्ये स्पर्शदोषो न विद्यते ॥ ३०४ ॥
आद्यसङ्गी समो दोषी सङ्गसङ्गी तदर्धतः ॥
तत्सङ्गी तृतीयभागी तुरीयस्तु न दोषभाक् ॥ ३०५ ॥
आद्यस्प्रष्टुर्भवेत्स्नानं द्वितीयस्यापि तत्स्मृतम् ॥
शिरः प्रोक्षणमन्येषामन्यत्राऽऽचमनं स्मृतम् ॥ ३०६ ॥
पलाश-शिंशिपाकाष्ठदन्तधावनकृन्नरः ॥
दिवाकीर्तिसमस्तावत् यावद्गां नैव पश्यति ॥ ३०७ ॥
पद्माश्म-लोहं फल-काष्ठ-चर्म-
भांण्डस्थतोयैः स्वयमेव शौचात् ॥

---

१. A. B. D. E. and F. read °त्रि° for °अष्ट°. २. Only A. reads गति° for गत°. ३. A. and C. read तावुभौ सर्वदा स्यातां निश्चितं सर्वकर्मसु ।. ४. A. reads this line thus:-पलायने वनेऽरण्ये स्पृष्टास्पृष्टिर्न दुष्यति ।. ५. F. substitutes दुष्यते for विद्यते. ६. B. reads भांडस्थले वा स्वयमेव शौचम् for भांडस्थतोयैः स्वयमेव शौचात्.

पुंसां निशास्वध्वनि निःसत्वानां
स्त्रीणां च शुद्धिर्विहिता सदैव ॥ ३०८ ॥
स्नानं स्पृष्टेन येन स्यात्काष्ठाद्यैर्यदि तत्स्पृशेत् ॥
नावारोहणवत् स्पर्शे तत्रोपस्पर्शनाच्छुचिः ॥ ३०९ ॥
म्लेच्छ-लूताशनास्पर्शे क्षेत्रे वा यदि वा स्थले ॥
उपस्पृशेत् शिरः प्रोक्ष्य संशुद्धो जायते द्विजः ॥ ३१० ॥
वस्त्रसंस्पर्शने तस्य सचैलाङ्गावगाहनम् ॥
अङ्गस्पर्शनवत्तस्य वदन्ति द्विजसत्तमाः ॥ ३११ ॥
चाण्डालोदकसंस्पृष्टः शुद्धः स्नानेन जायते ॥
तथा तद्भाण्डसंस्पर्शे स्नानमाहुर्मनीषिणः ॥ ३१२ ॥
उदक्या स्पर्शने स्नानमंशुकेनान्तराऽपि वा ॥
तत्स्पृष्टेऽपि भवेत्स्नानं तुल्याः सर्वा रजस्वलाः ॥ ३१३ ॥
संस्पर्शे मेद-भिल्लानां तथैव ब्रह्मघातिनाम् ॥
पतितानां च संस्पर्शे स्नानमेव विधीयते ॥ ३१४ ॥
रजस्वलादिसंस्पर्शे उपस्पर्शनमेव च ॥
उदक्यायास्त्रितीयेऽह्नि केचिदाचमनं विदुः ॥ ३१५ ॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रम्हघातिनी ॥
तृतीये रजकी प्रोक्ता चतुर्थे तु विशुध्यति ॥ ३१६ ॥
पुरुहूतः पुरा दैत्यं त्रिशीर्षाख्यं जघान यत् ॥
तद्वधे ब्रम्हहत्यायाः स्त्रीणां स प्रददौ फलम् ॥ ३१७ ॥
आसां तत्प्रभृति स्त्रीणामस्पृश्यत्वं सदा भवेत् ॥
अंशैर्दिनत्रयं ह्येतच्छुक्र-गुर्वादिकल्पितम् ॥ ३१८ ॥
शबराश्च पुलिन्दाश्च कैवर्ताश्च नटास्तथा ॥
एतान् रजकसन्तुल्यान् केचिदाहुर्मनीषिणः ॥ ३१९ ॥
रजक्याद्यभिगम्यत्वे वैश्या गो-मूत्र-यावकम् ॥
चरन्ति षड्गुणाहोभिः कृच्छ्रं वा द्विगुणं भवेत् ॥ ३२० ॥
ब्रम्ह-क्षत्रिय-विड्जाता शूद्रास्तेऽनुक्रमेण तु ॥
क्रमातिक्रमतश्चान्ये म्लेच्छान्त्यवर्णसंभवाः ॥ ३२१ ॥
भोज्याशनास्तु सच्छूद्रा अभोज्यान्नाः परे स्मृताः ॥
आमाशनानि भोज्यानि शृतमुच्छिष्टमुच्यते ॥ ३२२ ॥

---

१. B. reads °भंभो° for °भंग.° २. B. reads संसर्गे for संस्पर्शे.

दास-नापित-गोपाल-कुलमित्रा-ऽर्धसीरिणः ॥
भोज्यान्ना नापितश्चैव यश्चात्मानं निवेदयेत् ॥ ३२३ ॥
पर्युषितं चिरस्थं च भोज्यं स्नेहसमन्वितम् ॥
यव-गोधूम-माषाणां स्नेह-गोरसविक्रयः ॥ ३२४ ॥
आपद्गतो द्विजोऽश्नीयाद्गृह्णीयाद्वा यतस्ततः ॥
न स लिप्येत पापेन पद्मपत्रमिवाम्भसा ॥ ३२५ ॥
ज्ञापितं[1] शूद्रगेहेऽन्नं कटु पक्वं च यद्भवेत् ॥
नीत्वा नद्यंतिके तद्वै प्रोक्ष्य भुंजन्न दोषभाक् ॥ ३२६ ॥
गायत्र्योङ्कारपूताभिः केचिदद्भिश्च प्रोक्षणम् ॥
मन्यन्ते विष्णुमन्त्रेण कलिधर्मं[2] समाश्रिताः ॥ ३२७ ॥
आमं मांसं घृतं क्षौद्रं स्नेहाश्च फलसम्भवाः ॥
म्लेच्छभाण्डस्थिता ह्येते निष्क्रान्ताः शुचयः स्मृताः ॥ ३२८ ॥
आभीरभाण्डसंस्थानि पयो-दधि-घृतानि च ॥
तावत्पूतं हि तद्भाण्डं यावत्तत्र तु तिष्ठति ॥ ३२९ ॥
पूतानि सर्वपण्यानि कारुहस्तस्थितानि च ॥
अदत्तानि च भक्ष्याणि[3] यत्नतस्तु द्विजातिभिः ॥ ३३० ॥
सर्वस्वोपस्करैर्युक्ता शय्या रक्तांशुकानि च ॥
पुष्पाणि चैव शुध्यन्ति प्रोक्षितानि न संशयः ॥ ३३१ ॥
अलेपं मृण्मयं भाण्डं भाण्डसंचयमेव च ॥
प्रोक्षणादेव शुध्येत सलेपमग्नितापनात्[4] ॥ ३३२ ॥
कांस्यं च भस्मना शुध्येत् मद्य-मांसविवर्जितम् ॥
सुरा-मूत्र-पुरीषाभ्यां शुध्यते ताप-लेपनैः[5] ॥ ३३३ ॥
अलिप्तं मद्य-मूत्राद्यैस्ताम्रमम्लेन शुध्यति ॥
रजसा स्त्री मनोदुष्टा नद्यश्च वेगसंयुताः ॥ ३३४ ॥
अवेगमपि यद्भूरि सरिद्वारि ह्रदे च यत् ॥
सकृदस्पृश्यसंस्पृष्टं न दुष्यति च तत् ह्रदः[6] ॥ ३३५ ॥
सत्येन पूयते वाणी धर्मः सत्येन वर्धते ॥
तस्मात्सत्यं हि वक्तव्यमात्मशुध्यै द्विजातिभिः ॥ ३३६ ॥
रथ्याकर्दम-तोयानि नावः पथि तृणानि च ॥

---

१. B. reads अर्पितं for ज्ञापितं; while A. reads आर्पितं for ज्ञापितं.
२. A. reads कालधर्मं for कलिधर्मं. ३. A. reads रक्ष्याणि for भक्ष्याणि.
४. A. reads °घृडनात् for °तापनात्. ५. A. reads °लेखनैः for °लेपनैः.
६. A. reads सरिद्वरा. for तत् ह्रदः.

मारुतार्केण शुध्यन्ति निशि चंद्रर्क्ष-मारुतैः ॥ ३३७ ॥
यथासम्भवमुक्तानि प्रायश्चित्तानि सत्तम ॥
उक्तानुक्तानि सर्वाणि ज्ञातव्यानि द्विजातिभिः ॥ ३३८ ॥
प्रायश्चित्तं न यत्प्रोक्तं धर्मशास्त्रप्रवक्तृभिः ॥
द्विजैस्तत्र प्रकल्प्यं स्याद्धर्मशास्त्रार्थचिन्तकैः ॥ ३३९ ॥

उक्ता मया निष्कृतयः समासात्
संशुद्धये वर्णचतुष्टयस्य ॥
व्रतानि तेषां विहितानि यानि
वक्ष्याम्यतस्तानि निबोधयेति ॥ ३४० ॥

इति श्री बृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां प्रायश्चित्तनिर्णयो नाम अष्टमोऽध्यायः ॥ ८ ॥

# बृहत्पराशरसंहिता ।

## ॥ अथ नवमोऽध्यायः ॥

व्रतान्यथ प्रवक्ष्यामि ह्यैन्दवादिक्रमेण तु ॥
पापक्षयः कृतैर्यैः स्याद्धर्मार्थे तु महोदयः ॥ १ ॥
चन्द्रवृध्याऽश्नियात् ग्रासान् शुक्ले कृष्णे च न्हासयेत् ॥
चन्द्रक्षये न भोक्तव्यं यवमध्यं शशिव्रतम् ॥ २ ॥[1]
विपरीतक्रमेणाम्भावास्याद्यावास्याय न्हासयेत् ॥[2]
वर्धयेदन्यपक्षे तु पिपीलीमध्यमैन्दवम् ॥ ३ ॥
अष्टावष्टौ समश्नीयात्सव्रती प्रतिवासरम् ॥
अष्टग्रासिकमित्येतच्चान्द्रायणमथापरम् ॥ ४ ॥
शतद्वयं तु पिंडानां चत्वारिंशत्समन्वितम् ॥
मासेनैवोपभुंजीत चांद्रायणमथापरम् ॥ ५ ॥
चतुरः प्रातरश्नीयात्सायं ग्रासांश्च तावतः ॥
शिशुचांद्रायणं तज्ज्ञैः प्रोक्तं पापप्रणोदनम् ॥ ६ ॥
मध्यन्दिने यदश्नीयादष्टौ ग्रासान् दिनंप्रति ॥
चांद्रायणं यतीनां तु व्रतज्ञैः परिकीर्तितम् ॥ ७ ॥
शिखण्डसम्मितान् ग्रासान् चन्द्रव्रती प्रयोजयेत् ॥
दोषः स्यादन्यथाभावे तस्मादुक्तं समाश्रयेत् ॥ ८ ॥
एकभुक्तैश्च नक्तैश्च तथैवाऽयाचितैरपि ॥
उपवासैश्चतुर्भिश्च कृच्छ्रः षोडशभिर्दिनैः ॥ ९ ॥
उष्णं जलं पयः सर्पिरेकैकं च त्र्यहं पिबेत् ॥
वायुभक्षस्त्र्यहं तिष्ठेत्तप्तकृच्छ्रोऽयमुच्यते ॥ १० ॥
पलमेकं जलं पीत्वा पलमेकं तथा पयः ॥
पलमेकं तथाज्यस्य मानमेतत्प्रकीर्तितम् ॥ ११ ॥
एतत्त्रिगुणितं तज्ज्ञैर्महासांतपनं स्मृतम् ॥
प्राजापत्यं च कृच्छ्रं च पराकस्त्रिगुणो महान् ॥ १२ ॥

---

१. B. reads मध्ये शशिव्रतं चरेत् for यवमध्यं शशिव्रतम्. २. A. reads °णैतानाश° for °णाम्भाश°.

पद्मोदुम्बर-राजीव-बिल्वपत्रं कुशोदकम् ॥
प्रत्येकं प्रत्यहं प्राश्य पर्णकृच्छ्रः प्रकीर्तितः ॥ १३ ॥
प्रत्येकं प्रत्यहं गव्यं मूत्रं शकृत्पयो दधि ॥
घृतं कुशोदकं पीत्वा उपवासश्च तत्समः ॥ १४ ॥
एभिः सप्ताशनैरुक्तं दिव्यं[1] सान्तपनं द्विजैः ॥
सप्ताहेन तु कृच्छ्रोऽयं मुनिभिः परिकीर्तितः ॥ १५ ॥
एतत्तु[2] त्रिगुणं तज्ज्ञैर्महासान्तपनं स्मृतम् ॥
प्राजापत्यं च कृच्छ्रं च पराकस्त्रिगुणो महान् ॥ १६ ॥
एकभुक्तं च नक्तं च अयाचितविशेषणे ॥
पादकृच्छ्रोऽयमुद्दिष्टः त्रिघ्नं प्रजापतिव्रतम् ॥ १७ ॥
अयमेवातिकृच्छ्रः स्यात्पाणिपूरान्नभोजनः ॥
कृच्छ्रातिकृच्छ्रः पयसा दिवसानेकविंशतिः ॥ १८ ॥
दिनैर्द्वादशभिः प्रोक्तः पराकः समुपोषितैः ॥
एक-द्व्यह-त्र्यहादीनि नक्तं चैव यथाश्रुतम् ॥ १९ ॥
सम्प्राश्य तिलपिण्याकं तक्रं तोयं कुशोदकम् ॥
पञ्चमे ह्युपवासः स्यात्सौम्यकृच्छ्रोऽयमुच्यते ॥ २० ॥
चान्द्रायणे च कृच्छ्रे च त्रिकालं स्नानमाचरेत् ॥
स्नानद्वयं तु कर्तव्यं व्रतेष्वेवापरेषु च ॥ २१ ॥
शक्तिं ज्ञात्वा शरीरस्य स्नानं कार्यं तथा व्रतम्[3] ॥
असामर्थ्ये तु कायस्य याच्यः पर्षदनुग्रहः ॥ २२ ॥
ब्रह्मकूर्चं प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् ॥
कृतेन येन मुच्यन्ते प्राणिनः सर्वकिल्बिषैः ॥ २३ ॥
नीलिकायास्तु गोमूत्रं कृष्णायाः शकृदुद्धरेत् ॥
पयस्त्वतिसुवर्णायाः पीतायाश्च तथा दधि ॥ २४ ॥
कपिलाया घृतं तद्वन्महापातकनाशनम् ॥
अभावे सर्ववर्णायाः कपिलायाः समुद्धरेत् ॥ २५ ॥
पलानि पञ्च मूत्रस्य अङ्गुष्ठार्धं तु गोमयम् ॥
क्षीरं सप्तपलं ग्राह्यं तथा दध्नः पलत्रयम् ॥ २६ ॥
घृतं चाष्टपलं ग्राह्यं पलमेकं कुशाम्भसः ॥
मन्त्रैः सर्वाणि चैतानि अभिमन्त्र्याथ मिश्रयेत् ॥ २७ ॥

१. A. reads दिनैः for दिव्यं. २. This verse is not mentioned in A.; ३. A. reads त्रिभम् for व्रतम्.

गायत्र्या चैव गोमूत्रं गन्धद्वारेति गोमयम् ॥
आप्यायस्वेति वै क्षीरं दधिक्राव्णस्तथा दधि ॥ २८ ॥
तेजोऽसि शुक्रमित्याज्यं देवस्य त्वा कुशोदकम् ॥
निष्पन्नं पंचगव्यं च पात्रेषु क्रमतः पिबेत् ॥ २९ ॥
मध्यमेन पलाशस्य तत्पत्रेण पिबेद्द्विजः ॥
द्वितीयं पद्मपत्रेण ब्रह्मपत्रेण चापरे ॥ ३० ॥
चतुर्थं ताम्रपात्रेण तत्पिबेद्व्रतकृद्द्विजः ॥
आलोड्य प्रणवेनैव निर्मथ्य प्रणवेन च ॥ ३१ ॥
उद्धृत्य प्रणवेनैव प्राशयेत्प्रणवेन तु ॥
विष्णुं संस्नापयेद्भक्त्या पंचगव्येन चार्चयेत् ॥ ३२ ॥
कूष्माण्डैर्जुहुयान्मन्त्रैः पञ्चगव्यं हुताशने ॥
सव्याहृत्या च गायत्र्या तथैव प्रणवेन च ॥ ३३ ॥
ब्रह्मकूर्चमिदं प्रोक्तं व्रतं पंचदिनात्मकम् ॥
पञ्चगव्यं च सम्प्राश्य पंचरात्रोपवासकृत् ॥ ३४ ॥
नक्तेन वा समश्नीयाद्यावच्छक्त्या दिनानि च ॥
पाञ्चाहिकं पारणकं व्रतस्यास्य प्रकीर्तितम् ॥ ३५ ॥
निर्दहेत्सर्वपापानि ब्रह्मकूर्चमिदं स्मृतम् ॥
अन्ये वदन्ति कवय उपवासंविना व्रतम् ॥ ३६ ॥
जप-होमादि कर्तव्यं देवतार्चनमेव वा ॥
पञ्चगव्यं च होतव्यं पञ्चगव्यं समश्नियात् ॥ ३७ ॥
ब्राह्मणान् भोजयेत्तावद्यावत्कुर्यादिदं व्रतम् ॥
यत्वगस्थिगतं पापं विद्यते पुरुषस्य च ॥ ३८ ॥
ब्रह्मकूर्चो दहेत्सर्वं समिद्धोऽग्निरिवेन्धनम् ॥ ३९ ॥
यावन्ति पापानि भवन्ति पुंसां दैवादकामादपि कामतो वा ॥
उक्तानि तेषां मुनिना व्रतानि शुध्यर्थमेतान्यपराणि चैवम् ॥४०॥
धर्मार्थमेतानि कृतानि पुंसां दद्युर्दिवौकस्त्वविमुक्तसिद्धिः ॥
अत्रापि पूज्यत्वमशेषलोकैस्तेजःशरीरी विचरन् विभाति ॥४१॥
यस्यास्ति भीतिः पुरुषस्य पापादिच्छेच्च कर्तुं क्षयमेनसां च ॥
प्रीत्येव तं च व्रतदानजप्यं प्रोद्दिश्यमेतच्च तदन्यतस्तु ॥४२॥
वदन्ति दानं मुनयः प्रधानं कलौ युगे नान्यदिहास्ति किञ्चित् ॥
विशोधनं सर्वमिहापि पूज्यं वदामि तस्मादथ दानधर्मान् ॥ ४३ ॥

इति बृहत्पाराशरीये धर्मशास्त्रे सुव्रतप्रोक्तायां संहितायां ऐन्दवादिव्रतनिर्णयो नाम नवमोऽध्यायः ॥ ९ ॥

---

१. A. reads °विशुंक्तसिद्धाः for °विमुक्तसिद्धिः

# बृहत्पराशरसंहिता ।

॥ अथ दशमोऽध्यायः ॥

दानानि विधिना सार्धं जगौ यानि पराशरः ॥
व्यासस्य तानि वक्ष्यामि श्रूयतां द्विजसत्तमाः ॥ १ ॥
दानेन प्राप्यते स्वर्गो दानेन सुखमश्नुते ॥
इहामुत्र च दानेन पूज्यो भवति मानवः ॥ २ ॥
न दानात् परमो धर्मस्त्रिषु लोकेषु विद्यते ॥
तस्माद्दानं प्रदातव्यं यथाशक्त्या सदा नरैः ॥ ३ ॥
मुमुक्षवोऽपि योगीशा भिक्षादानोपजीविनः ॥
अन्नं तोय-समायुक्तं पृथगेते तथैव च ॥ ४ ॥
तोयमन्नं च वांच्छन्ति किं पुनः सानुरागिणः ॥
सर्वोपस्करसंयुक्तं गृहं च गृहमातृकम् ॥ ५ ॥
वृषादियुक्तं सीरं च वृषमेकं तथैव च ॥
गृह्याग्निना प्रदानेन गोप्रदानं तथैव च ॥ ६ ॥
सौरभेयीं द्विवक्त्रां च तिलधेनुमतः परम् ॥
घृतधेनुं पयोधेनुं हेमधेनुं सुविस्तरम् ॥ ७ ॥
कृष्णाजिनप्रदानं च वाजिस्यंदनमेव च ॥
एकवाजिप्रदानं च तथा तस्य परिग्रहः ॥ ८ ॥
सुखासनानि यानानि हस्ति रथं तथा गजम् ॥
एकहस्तिप्रदानं च कन्यादानफलं तथा ॥ ९ ॥
भूमिदानफलं चैव तुलापुरुषमेव च ॥
हेम-रूप्यप्रदानं च मणिकादिसमन्वितम् ॥ १० ॥
त्रपु-सीसक-ताम्रादिसर्वधातुप्रदानवत् ॥
नक्षत्र-तिथि-योगेषु यद्यत्तद्दानजं फलम् ॥ ११ ॥
विद्यादानफलं चैव प्राणदानं तथैव च ॥
अभयादिकदानानि प्रतिग्रहे यथा विधिः ॥ १२ ॥

---

१. A. reads स्वर्गो° for सर्वो°. २. A. B. D. E. and F. read गृह्य-
ग्यायाः for गृह्याग्निना.

इष्टा-पूर्तौ फलोपेतौ सर्वं विस्तरतो मया ॥
शक्तिसूनोः श्रुतं पूर्वं क्रमात्कथयतः शृणु ॥ १३ ॥
गो-हिरण्यादिदानानां सर्वेषामप्यनुत्तमम् ॥
अन्नदानमपेक्षन्ते सर्वेऽपि हि दिवौकसः ॥ १४ ॥
अन्नार्थं मातरिश्वायमन्नार्थं च तथाऽनलः ॥
अन्नार्थं सविता देवो वाति ज्वलति भासते ॥ १५ ॥
अन्नकामः ससर्जेदं विधिरप्यखिलं जगत् ॥
अन्नात्परतरं तत्वं न भूतं न भविष्यति ॥ १६ ॥
दद्यादहरहस्तस्मादन्नं विप्राय मानवः ॥
शृतं वा यदि वा चामं स स्वर्गे सुख मेधते ॥ १७ ॥
शोभनान् संभृतान् कुम्भान् पक्वान्नपरिपूरितान् ॥
अपूपैर्मोदकाद्यैश्च दत्वा दिवि सुखं वसेत् ॥ १८ ॥
मणिकं कलशान्वाऽपि यः पूरयति शक्तितः ॥
सुशुभाद्भिर्द्विजौकस्तु संपूर्णाशो दिवं व्रजेत् ॥ १९ ॥
द्विजान् यः पाययेत्तोयं अन्यानपि पिपासितान्[१] ॥
प्रपां तु कारयेद्ग्रीष्मे देवलोकमवाप्नुयात् ॥ २० ॥
यन्नातृणादिकं दद्याद्वर्षासु च प्रतिश्रयम् ॥
पादाभ्यङ्गं तथैधांसि शीते प्रावरणानि च ॥ २१ ॥
उपानत् पादुके चैव ददत्कामानवाप्नुयात् ॥
सप्तधान्यसमायुक्तं सर्वं स्नेहसमन्वितम् ॥ २२ ॥
सर्वोपस्करसंयुक्तं सर्वालंकारभूषितम् ॥
हिरण्य-गो-वृषा-ऽश्वैश्च तूली-शय्योपधानकैः ॥ २३ ॥
वरस्त्रीभूषणैर्युक्तं सकांस्यं ताम्रभाजनम् ॥
कण्डण्यादिसमायुक्तं ददत् पात्राय मानवः ॥ २४ ॥
पक्वेष्टकचितं कृत्वा सर्वलक्षणसंयुतम् ॥
मृण्मयं वा तथा सद्मः कृत्वा चाश्ममयं तथा ॥ २५ ॥
दत्वा स्थानमवाप्नोति प्राजापत्यमसंशयम् ॥
प्राकारा यत्र सौवर्णा गृहाण्युच्चैस्तराणि च ॥ २६ ॥
माणिक्य-गारुडैर्वज्रैर्मौक्तिकैर्भूषितानि च ॥
देवकन्यासहस्रेण स वृतो गीत-नृत्यकैः ॥ २७ ॥

---

१. A. reads पिपासकान्.

सेव्यमानोऽप्सरःसङ्घैः प्राजापतिसमं वसेत् ॥
अनड्वाहौ च धूर्वाहौ बलवन्तौ सुलक्षणौ ॥ २८ ॥
तरुणौ सुविषाणौ च घंटाभरणभूषितौ ॥
अदुष्टावेकवर्णौ तु सशिरौ दक्षिणान्वितौ ॥ २९ ॥
य आहूय द्विजाग्र्याय श्रद्धाभक्त्या तु मानवः ॥
सोऽनडुद्रोमतुल्यानि स्वर्गे वर्षाणि तिष्ठति ॥
अप्सराभिर्वृतो नित्यं सेव्यमानः सुरासुरैः ॥ ३० ॥
एकोऽपि हि वृषो देयो धूर्वहः शुभलक्षणः ॥
अरोगश्चापरिक्लिष्टो यस्मात्स दशगोसमः ॥ ३१ ॥
एकेन दत्तेन वृषेण यस्माद्भवन्ति दत्ता दश सौरभेयाः ॥
माहेश्यतो यद्धरणीसमानात्तस्माद्वृषात् पूज्यतमोऽस्ति नान्यः॥ ३२ ॥
गृष्टिदानं प्रवक्ष्यामि यथा देयं द्विजातिभिः ॥ ॥
यो विधिर्दक्षिणायाश्च तथा सर्वं निबोधत ॥ ३३ ॥
एकरात्रोषितः स्नातो गोदाता पञ्चगव्यपः ॥
पञ्चामृतेन संस्नाप्य सम्पूज्य गरुडध्वजम् ॥ ३४ ॥
सवत्सां वस्त्रसंयुक्तां सितयज्ञोपवीतिनीम् ॥
सुविषाणां सुरूपां च सर्वलक्षणसंयुताम् ॥ ३५ ॥
हेमकल्पितशृंगां च सुरूप्यचरणाग्रकाम् ॥
पयस्विनीं सुशीलां च हिरण्योपरिसंस्थिताम् ॥ ३६ ॥
प्रत्यङ्मुखाय विप्राय गृष्टिं तां च उदङ्मुखीम् ॥
त्वमिमां प्रतिगृह्णीयाः प्रीतोऽस्तु केशवोऽनया ॥
इति दत्वोदकं हस्ते पदान्यष्टौ विसर्जयेत् ॥ ३७ ॥
व्यावर्तेत ततःपश्चात्प्रणम्य शिरसा द्विजम् ॥
अनेन विधिना धेनुं यो विप्राय प्रयच्छति ॥ ३८ ॥
स विष्णुप्रीणमाधाति विष्णुलोकमसंशयम् ॥
आत्मनः पुरुषान् सप्त प्रागधस्ताच्च[१] सप्त च ॥
आत्मानं सप्तजन्मोत्थात्पापाद्विमोचयेन्नरः॥ ३९ ॥
पदे पदे तु यज्ञस्य गोर्वत्सस्य च मानवः ॥
फलमाप्नोति विप्रेन्द्राः शुश्रावैतत्पुरा हरेः ॥ ४० ॥
सर्वकामसमृद्धात्मा सर्वलोकेषु पूजितः ॥
नाम्नाप्यघौघहन्ता च यावदिन्द्राश्चतुर्दश ॥ ४१ ॥

---

१. B. C. D. E. and F. read प्रागस्तान् सप्त सप्त च.

इक्ष्वाकुणा तथा चान्यैर्बहुधा वसुधाधिपैः ॥
यैर्या नृभिरियं दत्ता जग्मुस्तेऽपि च विष्टपम् ॥ ४२ ॥
पश्यन्ति दीयमानां ये ये भवन्त्यनुमोदकाः ॥
तेऽपि पापाद्विनिर्मुक्ता विष्णुलोकमवाप्नुयुः ॥ ४३ ॥
पादद्वयं मुखं योऽन्यां प्रसवन्त्याः प्रदृश्यते ॥
तदा च द्विमुखी गौः स्याद्देया यावन्न सूयते ॥ ४४ ॥
क्षोणीतुल्या तदा सा गौः सर्वैरुक्ता मुनीश्वरैः ॥
सापि प्राग्विधिना देया सकांस्यदोहना द्विजाः ॥ ४५ ॥
[1]एकत्र पृथिवी सर्वा सशैल-वन-कानना ॥
तस्या गौर्ज्यायसी साक्षादेकत्रोभयतोमुखी ॥ ४६ ॥
गोर्वत्सस्य च लोमानि यावत्संख्यानि सत्तमाः ॥
तावत्सङ्ख्यानि वर्षाणि ध्रुवं ब्रह्मजने वसेत् ॥ ४७ ॥
[2]अरोगामपरिक्लिष्टां धेनुं गामथ वापि च ॥
दत्वा स्वर्गमवाप्नोति यावदाभूतसंक्षयम् ॥ ४८ ॥
तिलधेनुं प्रवक्ष्यामि प्रीणनाय हरेरिमाम् ॥
यथा तुष्यति गोविन्दो दत्तया नु गवाऽनघ ॥ ४९ ॥
ब्रह्मादिवर्णहा गोघ्नः पितृ-मातृसुहृद्वधात् ॥
अग्निदो गुरुहा चैव तथैव गुरुतल्पगः ॥ ५० ॥
सर्वपापसमायुक्तो युक्तो यश्चोपपातकैः ॥
सर्वैः पापैः प्रमुच्येत तिलधेन्वा प्रदत्तया ॥ ५१ ॥
अनुलिप्ते महीपृष्ठे वस्त्राजिनसमावृते ॥
धर्मज्ञाः केचिदिच्छन्ति कुतपे च तिलास्तृते ॥ ५२ ॥
आस्तीर्य त्वाविकं भूमौ तत्र कृष्णाजिनं पुनः ॥
तिलांस्तु प्रक्षिपेत्तत्र कृष्णाढकचतुष्टयम् ॥ ५३ ॥
कुर्यादुत्तरतोऽभ्यर्णे आढकेन तु वत्सकम् ॥
सर्वरत्नैरलङ्कुर्यात्सौरभेयीं सवत्सकाम् ॥ ५४
कार्यै हेममये शृङ्गे चरणा राजतास्तथा ॥

---

१. A. reads सा विप्रा विधिना देया सकांस्यदोहिनी तथा for the line.
२. A. reads this verse in the following manner:—
यः स्वामरोगामक्लिष्टां धेनुं वा यदि वा तनुम् ॥
दद्यात्स्वर्गमवाप्नोति देया यथा कथं हि गौः ॥

मिष्टान्नरसनां कुर्याद्गंधघ्राणवतीं शुभाम् ॥
आस्यं गुडमयं तस्याः सास्ना सूत्रमयी तथा ॥ ५५ ॥
ताम्रपृष्ठेक्षुपादा च कार्या मुक्ताफलेक्षणा ॥
प्रशस्तपत्रश्रवणा फलदन्तवती तथा ॥ ५६ ॥
शुभ्रस्रङ्मयलाङ्गूला नवनीतस्तनान्विता ॥
नारिङ्गैर्बीजपूरैश्च जम्बीरैर्नारिकेलकैः ॥ ५७ ॥
बदरा-ऽऽम्र-कपित्थैश्च मणि-मुक्ताफलार्चिताम् ॥
सितवस्त्रयुगच्छन्नां सितच्छत्रसमन्विताम् ॥ ५८ ॥
इदृग्विधां च तां कुर्यात् श्रद्धया परयान्वितः ॥
कांस्योपदोहनां दद्यात्केशवः प्रीयतामिति ॥ ५९ ॥
कुर्याच्च गृष्टिवद्विद्वान् इमामप्युत्तरामुखीम् ॥
सम्यगुच्चार्य विधिना दत्वैतेन द्विजोत्तमः ॥ ६० ॥
सर्वपापैर्विनिर्मुक्तः पितरं सपितामहम् ॥
प्रपितामहं तथा पूर्वं पुरुषाणां चतुष्टयम् ॥ ६१ ॥
पुत्र-पौत्रमधस्ताच्चेत्तथैव च चतुष्टयम् ॥
द्विजेन्द्रास्तारयन्त्येतान् तिलधेनुप्रदा नराः ॥ ६२ ॥
यश्च गृह्णाति विधिवत्पुरुषान् सोऽपि तावतः ॥
चतुर्दश तथा ये च ददतश्चानुमोदकाः ॥ ६३ ॥
दीयमानां च पश्यन्ति तिलधेनुं च ये नराः ॥
शृण्वंति ये च तां भक्त्या दीयमानां द्विजोत्तमाः ॥ ६४ ॥
तेऽप्यशेषाघनिर्मुक्ताः प्रयान्ति विष्णुलोकताम् ॥
प्रशान्ताय सुशीलाय तथाऽमत्सरिणे बुधः ॥
तिलधेनुं नरो दद्याद्वेदस्नाताय धर्मिणे ॥ ६५ ॥
त्रिरात्रं सतिलाहारस्तिलधेनुं ददाति यः ॥
एकरात्रं पुनर्भक्त्या तिलानत्ति प्रयत्नतः ॥ ६६ ॥
दातुर्विशुद्धपापस्य तस्य पुण्यवतो द्विजाः ॥
चान्द्रायणादप्यधिकं शस्तं तत्तिलभक्षणम् ॥ ६७ ॥

---

१. C. B. D. E. and F. read °रत्नवती for °दन्तवती. २. B. D. E. and F. read प्रयोगमपि शृण्वंति पठ्यमानं मनूत्तमाः. ३. A. पठ्यमानां द्विजोत्तमाः and C. पठ्यमानं च मानवाः. ४. B. E. and F. read सीदते for धर्मिणे; while D. reads धार्मिकः for धर्मिणे.

एवं प्रतिग्रहीतापि आदत्ते विधिना द्विजः ॥
स तारयति दातारमात्मानं च न संशयः ॥ ६८ ॥
प्रतिग्रहलुब्धास्तामिदग्धविप्रमुखेरिताः ॥
न स्फुरन्तीह मन्त्राश्च जप-होमादिकेषु च ॥ ६९ ॥
न दानं दीयते तस्य न तं कर्मणि योजयेत् ॥
निष्फलं तत्कृतं कर्म मृतस्यौषधदानवत् ॥ ७० ॥
अथातः संप्रवक्ष्यामि घृतधेनुमपि द्विजाः ॥
येन सा विधिना देया तं प्रवक्ष्याम्यशेषतः ॥ ७१ ॥
वदामि धेनुं घृतपूरकल्प्यां विधिं च वस्तूनि च यैः प्रकल्प्या ॥
तस्याः प्रदानेन फलं हि यच्च क्रिया च पात्रं त्वनुपर्व यच्च ॥ ७२ ॥
गोक्षीर-सर्पिर्मधु-खण्ड-दध्ना संस्नाप्य विष्णुं शुभवारिणा च ॥
संपूज्य पुष्पैश्च विलेप्य गन्धैर्दत्वा नैवेद्यं च सधूप-दीपम् ॥ ७३ ॥
घृतं च वह्निर्घृतमेव सोमो घृतं च सूर्यो घृतमेव वारि ॥
प्रदेहि तस्मात् घृतमेव विद्वन्! घृते प्रदत्ते सकलं प्रदत्तम् ॥ ७४ ॥
घृतेन गव्येन तु पूर्णकुम्भं प्रकल्प्यते गौः करकेन वत्सः ॥
हिरण्यगर्भां मणि-रत्नशोभां कुरुष्व कर्पूरसुचारुनासाम् ॥ ७५ ॥
शृङ्गे च कृष्णागरुदारवे च सौवर्णनेत्रे पटसूत्रसास्ना ॥
क्षौमं च पुच्छं गुड-दुग्धवक्त्रं जिह्वा च तस्या वरशर्करायाः ॥ ७६ ॥
द्राक्षोत्थैश्चैव खर्जूरैरन्यैः स्वादुफलैरपि ॥
उरस्तस्याः प्रकर्तव्यं पृष्ठं ताम्रं च धीमता ॥ ७७ ॥
इक्षुयष्टिमयाः पादाः शफा रौप्यमयास्तथा ॥
धान्यैश्च सप्तभिः पार्श्वे लोमानि सितसर्षपैः ॥ ७८ ॥
कांस्यदोहा प्रकर्तव्या सितवस्त्रावृता तथा ॥
सितच्छत्रसमायुक्ता सितचामरभूषिता ॥ ७९ ॥
वत्सस्य कुर्यादिति भूषणानि प्रोक्तानि सर्वाण्यपि यानि धेनोः ॥
अङ्गानि सर्वाणि च तद्वदस्य छत्रं सवस्त्रं च तथैव विप्राः ॥ ८० ॥
गृहाण चैनां मम पापहत्यै दुस्तारसंसारपयोधिपोत ॥
संसारतारो भव भूमिदेव! स्वर्गं प्रदेह्यक्षयमङ्ग विद्वन् ॥ ८१ ॥
विष्णुः सुरेशो घृतरश्मिरस्याः प्रीतोऽस्तु दानेन वरं ददातु ॥
व्याहृत्य चैतन्निजहस्ततोयं दत्वा क्षमस्वेति च वाग्विधेया ॥८२॥

---

१. A. reads °कल्पितां for °पूरकल्प्यां. २. A. reads पुण्येन for गव्येन.
३. A. reads द्विज° for निज,° B. D. E. and F. too read the same.

दात्रा द्विजेनात्र तु पूर्वमुक्तं संप्राश्य सर्पिर्व्रतमात्मशुद्ध्यै ॥
कार्यं प्रमुक्तोऽखिलकिल्बिषैस्तु प्राप्नोति कामान् घृत-दुग्धमिश्रान् ॥
घृत-क्षीरवहा नद्यो यत्र पायसकर्दमाः ॥
तेषु लोकेषु विप्रेन्द्र स पुण्येषूपजायते ॥ ८४ ॥
पितुरूर्ध्वं तु ये सप्त पुरुषास्तस्य येऽप्यधः ॥
तेषु तान् द्विजलोकेषु स नयेद्धूतकिल्बिषः ॥ ८५ ॥
सकामानां प्रियं गृष्टिः कथिता तव सत्तम ! ॥
विष्णुलोके नरा यान्ति सकामा घृतधेनुदाः ॥ ८६ ॥
जलधेनुं प्रवक्ष्यामि प्रीयते दत्तया यया ॥
देवदेवो हृषीकेशः सर्वेशः सर्वभावनः ॥ ८७ ॥
जलकुम्भं द्विजश्रेष्ठ सुवर्णरजतास्थितम् ॥
रत्नगर्भमशेषैस्तु ग्राम्यैर्धान्यैः समन्वितम् ॥ ८८ ॥
सितवस्त्रयुगच्छन्नं दूर्वा-पल्लवशोभितम् ॥
कुष्ठ-मांसी-मुरोशीर-वालकामलकैर्युतम् ॥ ८९ ॥
प्रियंगुपत्रसंयुक्तं सितयज्ञोपवीतिनम् ॥
सोपानत्कं च सच्छत्रं दर्भविष्टरसंस्थितम् ॥९० ॥
चतुर्भिः संवृतैः पात्रैस्तिलपूर्णैश्चतुर्दिशम् ॥
स्थगितं दधिपात्रेण घृत-क्षौद्रवता मुखे ॥ ९१ ॥
उपोषितः समभ्यर्च्य वासुदेवं सुरेश्वरम् ॥
पुष्प-धूपोपहारैश्च यथाविभवसंभवम् ॥ ९२ ॥
तस्मिन् कुम्भे लिखेद्धेनुं सवत्सां यक्षकर्दमैः ॥
प्रतिष्ठां तत्र कुर्वीत मंत्रैर्वेदचतुष्टयैः ॥ ९३
सङ्कल्प्य जलधेनुं च समभ्यर्च्य जनार्दनम् ॥
पूजयेद्वत्सकं तद्वत्कृतं जलमयं बुधः ॥ ९४ ॥
अत्रोचुरपरे केचित्पूजयेत् घृतवत्सकम् ॥
पञ्चांशेन तु कुम्भस्य चतुर्थांशेन चापरे ॥
एवं सम्पूज्य गोविन्दं जलधेनुं सवत्सकाम् ॥ ९५ ॥

---

१. A. reads लोकान् for कामान्, D. and F. too the same. २. A. only reads °दिग्धान् for °मिश्रान्. ३. B. reads नयत्यस्त.° ४. B. and E. read पुष्टिः for गृष्टिः; the rest-A. reads स्तुष्टिः D. F. read घृष्टिः. ५. A. reads °शाश्वतः for °भावनः. ६. B. C. D. E. and F. read सम्पूर्ण° for सुवर्ण°. ७. A. D. and F. read सघृतैः.

सितवस्त्रधरः शान्तो वीतरागो विमत्सरः ॥
दद्याद्विप्राय तां विप्रः प्रीतये जलशायिनः ॥ ९६ ॥
जलशायी जगज्ज्योतिः[1] प्रीयतां केशवो मम ॥
इति चोच्चार्य विप्रेन्द्रो विप्राय प्रतिपादयेत् ॥ ९७ ॥
अपक्वाशनिना स्थेयमहोरात्रमतः परम् ॥
अनेन विधिना दत्त्वा जलधेनुं द्विजोत्तमाः ॥ ९८ ॥
सर्वाह्लादमवाप्नोति यद्यत् ध्यायति मानवः ॥
शरीरारोग्य-दीर्घायुः प्रशस्यः सर्वकामुकः[2] ॥ ९९ ॥
नृणां भवति दत्तायां जलधेन्वां न संशयः ॥
इमामपि प्रशंसन्ति जलधेनुं द्विजोत्तम![3] ॥ १०० ॥
ये नरास्तेन वै यान्ति विष्णुलोकमसंशयम्[4] ॥
हेमा-ऽऽज्याभ्र-तिलैर्विद्वन् धेनुर्यद्यपि कल्पिता ॥
तथापि ते च भक्ष्याः स्युर्धर्मशास्त्रमतादृताः ॥ १०१ ॥
भक्षणीयं च यद्वस्तु धेन्वंगेषु प्रकल्पितम् ॥
तस्यादृश्यं तदभ्येति वेदमन्त्रैः प्रतिष्ठितम् ॥ १०२ ॥
पुनः संवृतमन्त्रेषु तदाकुंचनमुद्रया ॥
कृते विसर्जने तेषां वस्तुरूपं पुनर्भवेत् ॥ १०३ ॥
अथान्यत्संप्रवक्ष्यामि दानानामुत्तमं परम् ॥
यद्दत्वा मानवो याति सायुज्यं परवेधसः ॥ १०४ ॥
धेनुर्देया सुवर्णस्य कारयित्वा द्विजातये ॥
यां दत्वा प्राङ् महीपाला ब्रह्मणः सदनं गताः ॥ १०५ ॥
सा चतुर्भिस्त्रिभिर्वापि शुद्धवर्णपलैर्द्विजः ॥
पलाभ्यामपि च द्वाभ्यां पलेनैकेन वा पुनः ॥ १०६ ॥
हीनं तु नैव कर्तव्यं सत्यां सम्पदि सद्द्विजाः ॥
हीनं तु कुर्वतो दानं दातुस्तन्निष्फलं भवेत् ॥ १०७ ॥
चतुर्थांशेन धेन्वास्तु हैमं वत्सं प्रकल्पयेत् ॥
सर्वरत्नैरलङ्कुर्यात् वक्ष्यमाणक्रमेण तु ॥ १०८ ॥
राजतं वत्सकं कुर्याद्खुरान्ये च तद्विदः ॥
अलङ्काराश्च सर्वेऽपि गोवद्वत्से प्रकल्पयेत् ॥ १०९ ॥

१. A. reads °योनिः for °ज्योतिः. २. A. reads प्रशमः सार्वकामिकः for प्रशस्यः सर्वकामुकः. ३. A. and F. read this line thus-इमामपि प्रपश्यन्ति दीयमानां द्विजोत्तमाः. ४. E. and F. read thus-तेऽपि दानंविना यांति.

सकाशाद्वासुदेवस्य यां शुश्राव युधिष्ठिरः ॥
दत्वा प्राप्तो हरेर्लोकं सा मयेयमुदीरिता[1] ॥ ११० ॥
मुक्ताफलशफा कार्या प्रवालकविषाणिका ॥
पद्मरागाक्षियुग्मा च घृतपात्रस्तनान्विता ॥ १११ ॥
कर्पूरा-ऽगरुलालाटा[2] शर्करारदना[3] स्मृता ॥
मिष्टान्नमुखसंयुक्ता शंखशृंगांतरा तथा ॥ ११२ ॥
जात्यशुक्तिललाटा च द्राक्षादिरसना तथा ॥
सुपद्म[4]युग्मपार्श्वा सा क्षौमसास्नावती तथा ॥ ११३ ॥
इक्ष्वंघ्रिर्गुडजानुश्च पञ्चगव्यगुदा स्मृता ॥
नारीकेलैश्च कर्तव्यौ कर्णौ पृष्ठं च कांस्यकम् ॥ ११४ ॥
सत्पट्टसूत्रलाङ्गूला सप्तधान्यसमावृता ॥
फल-पुष्पोपसम्पन्ना छत्रोपानत्समन्विता ॥ ११५ ॥
सुवर्णधेनुमार्याय विप्राय प्रतिपादयेत् ॥
अश्वमेधसहस्रस्य दत्वा फलमवाप्नुयात् ॥ ११६ ॥
कुलानां हि सहस्रं तु स्वर्गं नयत्यसंशयम् ॥
किमन्यैर्बहुभिर्दानैरलं हेमगवाऽनया ॥ ११७ ॥
हेमधेनुप्र[5]दानेन कृतकृत्यो हि वर्तते ॥
हिरण्यगर्भो भगवान् प्रीयतामिति कीर्तयेत् ॥ ११८ ॥
[6]उपवासी विशुद्धात्मा दत्वा सोम-रविग्रहे ॥
दीयमानां च पश्यन्ति ये नरा हेमगामिमाम् ॥ ११९ ॥
पठ्यमानां च शृण्वन्ति तेऽपि यान्ति त्रिविष्टपम् ॥
यत्रास्ते लिखिता गेहे स्वर्णदानस्य संस्तुतिः ॥
रक्षो-भूत-पिशाचाद्यास्ततो नश्यन्ति सद्विजाः ॥ १२० ॥
एता मयोक्तास्तव वत्स ! सर्वा गुड्यादिका विस्तरतोऽत्र गावः ॥
इक्ष्वाकुभूभृत्प्रभृतिक्षितीशा जग्मुर्दिवं या विधिवच्च दत्वा ॥ १२१ ॥
कृष्णाजिनस्य दानस्य प्रवक्ष्यामि शुभं विधिम् ॥
प्रमाणं च विधिर्येस्य यस्मै विप्राय दीयते ॥ १२२ ॥

---

१. A. reads सामगेयम for सा मयेयम्. २. A, B. D. F. read °नासा च for °लालाटा. ३. B. C. E. read द्राक्षादिरसना. for शर्करारदना ४. A. reads °पक्ष° for °पद्म,° D. and F. too the same. ५. A. reads °प्रभावेन for °प्रदानेन. ६. B. E and F. read उपवास° for उपवासी.

वैशाख्यां पूर्णिमायां च कार्तिक्यामथ वापि च ॥
उभयोस्तत्प्रदातव्यं रवि-सोमग्रहेऽपि च ॥ १२३ ॥
अक्लिष्टमच्छिद्रमलोमकं च सघ्राणरंध्रं सशफं सशोकम् ॥
साण्डप्रदेशं सविषाणवक्त्रं शस्तं प्रदाने सितकृष्णचर्म ॥ १२४ ॥
एवमेतद्विधं चर्म गृहीत्वा द्विज पावनम् ॥
कल्पयेद्धेनुवत्तच्च हेमशृंगादिकं तथा ॥ १२५ ॥
शृङ्गे हेममये तस्य शफाश्च रजतस्य च ॥
मुक्ताफलैश्च लाङ्गूलं कुर्यात् शाठ्यं विवर्जयेत् ॥ १२६ ।'
•अनुलिप्ते महीपृष्ठे प्रसृते कुतपेऽशुके ॥
तत्र प्रसारयेन्मार्गं तिलैस्तदपि पूरयेत् ॥ १२७ ॥
वदन्ति तद्विदः सर्वे चतुर्द्रोणैस्तु पूरयेत् ॥
पुंसो नाभिप्रमाणं तु अपरे कवयो विदुः ॥ १२८ ॥
नाभिमात्रं वदन्त्यन्ये राशिं कुर्यादिति द्विजः ॥
तिलैश्च पूरयेत् पश्चादजिनं च समन्ततः ॥ १२९ ॥
हेमनाभं च तं कुर्यात् हेम्ना कर्षेण तु द्विजः ॥
शक्त्या वापि प्रकर्तव्यं मनःशुद्धिर्यथा भवेत् ॥ १३० ॥
सौवर्णं क्षीरपूर्णं तु पात्रं प्राच्यां निधापयेत् ॥
राजतं दधिपूर्णं तु तथा दक्षिणतो द्विजः ॥ १३१ ॥
ताम्रमाज्यभृतं पात्रं पश्चिमायां दिशि स्मृतम् ॥
क्षौद्रपूर्णं तथा कांस्यं चतुर्दिक्षु क्रमेण तु ॥ १३२ ॥
शक्त्या वापि च कर्तव्यं वित्तशाठ्यं विवर्जयेत् ॥
दद्याद्वेदविदे चैव ब्राह्मणायाहिताग्नये ॥ १३३ ॥
परिधाप्याऽहते वस्त्रे अलङ्कृत्य च भूषणैः ॥
चतस्रो गृष्टयः कार्या इत्यन्ये कवयो विदुः ॥ १३४ ॥
वदन्ति मुनयो गाथां मार्गमाहात्म्यवेदिनः ॥
नानाविधांश्च विद्वांसः पुराणार्थविदो विदुः ॥ १३५ ॥
यस्तु कृष्णाजिनं दद्यात्सखुरं शृंगसंयुतम् ॥
तिलैः प्रच्छाद्य वासोभिः सर्वरत्नैरलङ्कृतम् ॥ १३६ ॥
ससमुद्रगुहा तेन सशैल-वन-कानना ॥

---

१. B. reads एतयोः for उभयोः. २. A. reads °शष्प° for °कृष्ण°; while E. F. read °मृक्ष° for °कृष्ण.°

चतुरस्रा भवेद्दत्ता पृथिवी नात्र संशयः ॥ १३७ ॥
कृष्णाजिने तिलान् दत्वा हिरण्य-मधु-सर्पिषा ॥
ददाति यस्तु विप्राय सर्वं तरति दुष्कृतम् ॥ १३८ ॥
यः कृष्णाजिनमास्तीर्य हेमरत्नयुतैस्तिलैः ॥
वस्त्रावृतं सोपवासो विष्णोरायतने तथा ॥ १३९ ॥
वैशाख्यां पूर्णिमायां वा कार्तिक्यां वा समाहितः ॥
दद्याद्विप्रे तपोयुक्ते सद्वृत्ते च यतेन्द्रिये ॥ १४० ॥
आहिताग्नौ ससन्ताने प्रदद्याद्भूरिदक्षिणम् ॥
यावन्त्यजिनलोमानि तिला वस्त्रस्य तन्वतः ॥ १४१ ॥
तावन्त्यब्दसहस्राणि दाता विष्णुपुरे वसेत् ॥
विशेषमपरे ब्रूयुर्विषुवायनयोर्द्वयोः ॥ १४२ ॥
तद्व्रणं बहिर्लोम प्राग्ग्रीवं तु प्रसारयेत् ॥
चतसृषु तथा दिक्षु सुवर्ण-रजतानि च ॥ १४३ ॥
निधाय शक्त्या पात्राणि क्षीराद्यैः[1] पूरितानि च ॥
तस्य पश्चात्समिद्धाग्निं परिसंमृज्य तं पुनः ॥ १४४ ॥
पर्युक्ष्य च परिस्तीर्य महाव्याहृतिभिस्तथा ॥
साज्यान् हुत्वा तिलांस्तत्र विप्राय प्रतिपादयेत् ॥ १४५ ॥
नाभिं स्पृशन्नदीतोयं मार्गं गृह्णाम्यहं त्विदम् ॥
धीमान् दद्याद्विजेन्द्राय वाचयित्वा प्रतिग्रहम् ॥ १४६ ॥
पश्चाद्वस्त्रादिकं[2] दद्यादेषा प्रतिग्रहे स्थितिः ॥
यमगीतामथो गाथामुदाहरन्ति तद्विदः ॥
दातॄणां सत्तमानां तु विशेषप्रतिपत्तये ॥ १४७ ॥
गो-भू-हिरण्यसंयुक्तं मार्गमेकं ददाति यः ॥
स सर्वपापकर्मापि सायुज्यं ब्रह्मणो व्रजेत् ॥ १४८ ॥
प्रोक्तेन चैतेन मुनीश मार्गं दद्याद्द्विजेन्द्रे विधिना प्रयुक्तम् ॥
पापानि हत्वा स पुरातनानि प्रयाति वेधोवपुरेव योगी ॥ १४९ ॥
सुखासनं च यो दद्याज्जवनाख्यमथोत्तमम्[3] ॥
देवयानैर्दिवं याति स्तूयमानः सुरासुरैः ॥ १५० ॥

१. A. reads °राद्यैः for °राद्यैः. २. B. reads हस्तोदकं for वस्त्रादिकं D. E. F. and A. too read the same. ३. C. reads आपनाख्यम् for जवनाख्यम् and D. E. and F. read विमानाख्यम्.

योऽरथं ह्यसंयुक्तं हेमपुष्पैरलङ्कृतम् ॥
कृतरज्जुं च पट्टाद्यैर्नेत्रपट्टकृतैरपि ॥ १५१॥
तत्सर्वं स्थगितैर्वस्त्रैः पाट्टिपट्टालकैः शुभैः ॥
मुक्ताफलैस्तथानेकैर्मणिभिश्चोपशोभितम् ॥ १५२ ॥
हयौ चैव शुभैर्वस्त्रैर्भूषितावत्यलङ्कृतौ ॥
तौ भूषणैरलङ्कृत्य मुखयन्त्रसुशोभितौ ॥ १५३ ॥
सपर्याणौ कशायुक्तौ ग्रीवाभरणभूषितौ ॥
शुभलक्षणसंयुक्तौ तरुणौ तत्र योजयेत् ॥ १५४ ॥
रवि-सोमग्रहे दद्याच्छुभे वाऽन्यत्र पर्वणि ॥
अयनयोर्द्विजाग्र्याय स प्राप्नोत्यर्कलोकताम् ॥ १५५ ॥
वसेद्रविसमं तत्र सेव्यमानः स दैवतैः ॥
एकं वापि हयं दत्वा सर्वालङ्कारभूषितम् ॥ १५६ ॥
सुलक्षणं युवानं च सोऽश्विलोकमवाप्नुयात् ॥
दद्यादश्वरथं यस्तु हेमरत्नविभूषितम् ॥ १५७ ॥
दिव्यवस्त्रपरिच्छन्नं नेत्रपट्टादिभिः शुभैः ॥
सौवर्णैरर्धचन्द्रैश्च राजतैर्वा विभूषितम् ॥ १५८ ॥
शुभैर्मुक्ताफलैरन्यैर्नीलवस्त्रादिभिस्तथा ॥
गजौ सुलक्षणोपेतौ सुशीलौ नीरुजावपि ॥ १५९ ॥
शुभदन्तौ सुरूपौ च हेमालङ्कारधारिणौ ॥
दिव्यवस्त्रैः परिच्छन्नौ कर्णशंखावलम्बिनौ ॥ १६० ॥
पट्ट-नेत्रादिकक्षौ तौ विशिष्टमणिमण्डितौ ॥
ईदृग् रथं च संयोज्य पताकाभिर्विभूषितम् ॥ १६१ ॥
शोभितं पुष्पमालाभिः शङ्ख-दुन्दुभिनिःस्वनैः ॥
चतुर्वेदाय विप्राय त्रिवेदाय तथा पुनः ॥ १६२ ॥
शुचये च द्विवेदाय श्रोत्रियाय कृतेष्टये ॥
अलङ्कृत्य समालाभिः परिधाप्य सुवाससी ॥ १६३ ॥
तस्य हस्तोदकं दद्यात्प्रीयतां केशवो मम ॥
एवं हस्तिरथं दद्यात्समभ्यर्च्य द्विजातये ॥
निहत्य सर्वपापानि विष्णुलोके महीयते ॥ १६४ ॥

---

१. D. reads समारभ्य and A. reads समालभ्य.

वसेच्चतुर्भुजस्तत्र सेव्यमानश्चतुर्भुजैः ॥
अनन्तकालमातिष्ठेच्छङ्ख-चक्र-गदाधरः ॥ १६५ ॥
पश्यन्तीह रथं ये तु दीयमानं नरा द्विज ! ॥
तेऽपि विष्णुपुरं यान्ति वासिष्ठजवचो यथा ॥ १६६ ॥
एकमपीह यो दद्याद्धस्तिनं च सभूषणम् ॥
सवस्त्रं हेमरदनं नखैरजतकल्पितैः ॥ १६७ ॥
मणि-मुक्ताफलैर्युक्तं सुवर्ण-रजतान्वितम् ॥
पूर्वोक्ताय तु विप्राय चतुर्वेदाय वा द्विजाः ॥ १६८ ॥
यो दद्याद्विधिवत्सोऽपि सदा विष्णुपुरं वसेत् ॥
विधिवद्यश्च गृह्णाति सर्वमेव प्रतिग्रहम् ॥ १६९ ॥
दातृलोकमवाप्नोति पराशरवचो यथा ॥
अलङ्कृत्य तु यः कन्यां ब्राह्मोद्वाहेन यच्छति ॥ १७० ॥
अन्योद्वाहेन केनापि गजदानशतं लभेत् ॥
गजदानस्य यत्पुण्यं तस्माच्छतगुणं फलम् ॥ १७१ ॥
कन्यादा विधिवत्सर्वे प्राप्नुवन्ति ह्यसंशयम् ॥
पुत्रदानं च वाञ्छन्ति केचिद्वत्स मनीषिणः ॥ १७२ ॥
कन्यादानात्परं प्रयुः पुत्रदानं शतोत्तरम् ॥
भूमिं सस्यवतीं दद्यात् यस्तु विप्राय मानवः ॥ १७३ ॥
स मूल-शूकतुल्यानि विष्णुलोके सदा वसेत् ॥
षड्भिस्तु सहितान् विप्रान्वंशानुभयतो दश ॥
तानेव द्विगुणान्याहुरिति केचिन्निवर्तनम् ॥ १७४ ॥
दशहस्तैर्भवेद्वंशश्चतुर्भिस्तैस्तु विस्तरः ॥
दैर्घ्येऽपि दशभिर्वंशैर्गोचर्म परिकीर्तितम् ॥ १७५ ॥
अपि गोचर्ममात्रेण भूमिं दद्याद्द्विजातये ॥
विष्णुलोकमवाप्नोति केचिदाहुर्मनीषिणः ॥ १७६ ॥
पञ्चहस्तकदण्डानां चत्वारिंशद् दशाहता ॥
पञ्चभिर्गुणिता सा तु निवर्तनमिति स्मृतम् ॥ १७७ ॥
बालवत्सकधेनूनां सहस्रं यत्र तिष्ठति ॥
तद्वै निवर्तनं ज्ञेयं इति केचिद्वदन्ति हि ॥ १७८ ॥

---

१. A. reads this verse thus—
दशहस्तकवंशेन वंशाश्चत्वारिविस्तरे ॥
दश दैर्घ्ये स विज्ञेयो गोचर्म इति कीर्तितम् ॥

ते यूयं तारयध्वं मां संसारार्णवतो द्विजाः ॥
आगता मम पुण्येन पूर्तकर्मप्रसाधकाः ॥ २३४ ॥
कूर्मश्च मकरश्चैव सौवर्णस्तत्र कारयेत् ॥
मीनाश्च रासभाश्चैव ताम्रा दर्दुरकाः स्मृताः ॥ २३५ ॥
जलकुञ्जर-गोधाश्च सैसास्तत्र प्रकल्पयेत् ॥
अन्येऽपि जलजास्तत्र शक्तितस्तान्प्रकल्पयेत् ॥ २३६ ॥
इमं पुण्यं प्रशस्तं च तडागादिविधिं नरः ॥
वापी-कूप-तडागादौ कारयेत् ब्राम्हणैर्बुधैः ॥ २३७ ॥
खातयित्वा तडागादि स्वभावाच्छाठ्यवर्जितः ॥
मानवः क्रीडति स्वर्गे यावदिन्द्राश्चतुर्दश ॥ २३८ ॥
एतद्विधानं विदधाति भक्त्या खातेषु सर्वेषु तडागकेषु ॥
सोऽमुत्र कामैः परिपूर्णदेहो भुङ्क्ते धरिण्यामिह सर्वभोगान् ॥ २३९ ॥
वदन्ति केचिद्वरुणस्य लोके प्रयाति भोगान्वरुणस्य भुङ्क्ते ॥
भुक्त्वा चिरं तत्र पुनर्धरिण्यां नरेन्द्रतामेति पराशरोक्तिः ॥२४०॥

इति तडागादिप्रतिष्ठा।

अथातः सम्प्रवक्ष्यामि द्विजेन्द्राः श्रूयतामितः ॥
लक्षहोमविधिं पुण्यं कोटिहोमविधिं ततः ॥ २४१ ॥
स्वयंभूर्यमुवाच प्राक् अस्मत्तातं पितामहः ॥
तमिमं सम्प्रवक्ष्यामि श्रूयतां पापनाशनम् ॥ २४२ ॥
ये चेह ब्राह्मणाः कार्या भूमिर्वा यत्र मण्डपम् ॥
समिधो याश्च ये मन्त्रा अन्यच्च तत्र यद्भवेत् ॥ २४३ ॥
लक्षहोममिमं विप्राः कथ्यमानं निबोधत ॥
युग्माश्च ऋत्विजः कार्या ब्राम्हणा ये विपश्चितः॥ २४४ ॥
नियमव्रतसंपन्ना सहिताः पार्थिवेन तु ॥
नित्यं जपरता ये च नियोज्यास्तादृशा द्विजाः ॥ २४५ ॥
कन्द-मूल-फलाहारा दधि-क्षीराशिनोऽपि च ॥
प्रागुदीच्यां समे देशे स्थण्डिलं यत्र कारयेत् ॥ २४६ ॥
तत्र वेदीं प्रकुर्वीत पञ्चहस्तप्रमाणिकाम्[१] ॥
दक्षिणोत्तर आयामे त्रिंशत्तु पूर्वपश्चिमे ॥ २४७ ॥

१. A. reads. °समन्विताम् for °प्रमाणिकाम्.

कुण्डानि खनितव्यानि अङ्गुलान्येकविंशतिः ॥
निधापयेद्धिरण्यं च रत्नानि विविधानि च ॥ २४८ ॥
सिकतोपरि दातव्या तत्राप्यग्निं समिन्धयेत् ॥
ग्रहांश्चैव सनक्षत्रान् दिशि प्राच्यां समर्चयेत् ॥ २४९ ॥
अवदानविधानेन स्थालीपाकं समर्पयेत् ॥
आज्यभागाहुतीर्हुत्वा नवाहुत्या च होमयेत् ॥ २५० ॥
अग्निं सोमं तथा सूर्यं विष्णुं चैव प्रजापतिम् ॥
विश्वेदेवान् महेन्द्रं च मित्रं स्विष्टकृतं तथा ॥ २५१ ॥
दधि-मधु-घृताक्तानां समिधां चैव याज्ञिकाः ॥
होमयेच्च सहस्रं तु मंत्रैश्चैव यथाक्रमम् ॥ २५२ ॥
चतुर्विंशति गायत्र्या मानस्तोकेति षट् तथा ॥
त्रिंशत् ग्रहादिमन्त्रैश्च चत्वारश्चैव वैष्णवैः ॥ २५३ ॥
कूष्माण्डैर्जुहुयात्पञ्च विकिरेद्वाथ षोडश ॥
जुहुयाद्दशसहस्राणि जातवेदस इत्यृचा ॥ २५४ ॥
तथा पञ्चसहस्राणि जुहुयादिन्द्रदैवतैः ॥
हुते शतसहस्रे तु अभिषेकं विधापयेत् ॥ २५५ ॥
पुण्याभिषेके यत्प्रोक्तं तत्प्रदाय शुभं भवेत् ॥
अथ षोडशभिः कुम्भैः सहिरण्यैः समङ्गलैः ॥ २५६ ॥
सर्वौषधिसमायुक्तैर्नानारत्नविभूषितैः ॥
अभिषेकं ततः कुर्यात्स्नानमन्त्रैर्यथोचितैः ॥ २५७ ॥
समाप्ते तु ततस्तस्मिन् प्रधाना दक्षिणाः स्मृताः ॥
गजा-ऽश्वरथ-यानानि-भूमि-वस्त्रयुगानि च ॥ २५८ ॥
अन्नं च गोशतं हेम ऋत्विजां चैव दक्षिणा ॥
वृषेणैकादशेनाथ दातव्या दश धेनवः ॥ २५९ ॥
स्वशक्त्यातः प्रदातव्यं वित्तशाठ्यं न कारयेत् ॥
एवं कृते तु यत्किञ्चित् ग्रहपीडासमुद्भवम् ॥ २६० ॥
भौममाकाशगं वापि अरिष्टं यच्च जायते ॥
तत्सर्वं लक्षहोमेन प्रशमं याति निश्चितम् ॥ २६१ ॥

---

१. A. B. D. E. and F. read किरिकया तु for विकिरेद्वाथ. २. D. and F. read पुष्पाभिषेके for पुण्याभिषेके; while C. reads इष्वाभिषेके.

शान्तिर्भवति पुष्टिश्च बलं तेजः प्रवर्द्धते ॥
वृष्टिर्भवति राष्ट्रे च सर्वोपद्रवसंक्षयः ॥ २६२ ॥

इति लक्षहोमविधिः ।

अथातः सम्प्रवक्ष्यामि कोटिहोमविधिं द्विजाः ॥
श्रूयतामादरेणैष सर्वकामफलप्रदः ॥ २६३ ॥
सानुष्ठाना द्विजाः प्रोक्ता ऋत्विजो यागकर्मणि ॥
विधिज्ञाश्चैव मन्त्रज्ञाः स्वदारनिरताश्च ये ॥ २६४ ॥
वरणीया विशेषेण ग्रहयागक्रियाविदः ॥
एकाङ्गविकलो विप्रो धन-धान्यापहारकः ॥ २६५ ॥
सर्वाङ्गविकलो यस्तु यजमानं हिनस्ति सः ॥
तस्मात्सर्वप्रयत्नेन वेदाङ्गविधिकोविदाः ॥ २६६ ॥
प्रकर्तव्या विशेषेण ग्रहयज्ञविदो द्विजाः ॥
कार्यश्चैव प्रयत्नेन ग्रहयज्ञश्च वै द्विजैः ॥ २६७ ॥
अध्येता चैव मन्त्राणां ऋचामष्टोत्तरं शतम् ॥
स एव ऋत्विग् विज्ञेयः सर्वकामफलप्रदः ॥ २६८ ॥
आवाहनीयो यत्नेन प्रणिपत्य मुहुर्मुहुः ॥
ग्रहाः फलन्तु नागाश्च[1] सुराश्चैव नरेश्वराः ॥ २६९ ॥
एवं कृते तु यत्किञ्चित् ग्रहपीडासमुद्भवम ॥
तत्सर्वं नाशयेद्दुःखं कृतघ्नसौहृदं यथा ॥ २७० ॥
अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयम्भुवा ॥
आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥ २७१ ॥
पूर्ववद् ग्रहदेवानां आवाहन-विसर्जने ॥
होममन्त्रास्तु एवोक्ताः स्नानं दानं तथैव च ॥ २७२ ॥
मण्डपस्य च वेद्याश्च विशेषं च निबोधत ॥
कोटिहोमे चतुर्हस्तं चतुर्हस्तायतं पुनः ॥ २७३ ॥
योनिवक्त्रद्वयोपेतं तदप्याहुस्त्रिमेखलम् ॥
द्व्यङ्गुलेनोच्छ्रिता कार्या प्रथमा मेखला बुधैः ॥ २७४ ॥

---

१. E. reads गावश्च for नागाश्च; while B. D. E. and F. महा रघु: फलं नागाः for महाः फलंतु नागाश्च.

ध्यङ्गुलैरुच्छ्रृता तद्वद्द्वितीया मेखला स्मृता ॥
उच्छ्राये मेखला या तु तृतीया चतुरङ्गुला ॥ २७५ ॥
द्व्यंगुलस्तत्र विस्तारः पूर्वयोरेव शस्यते ॥
वितस्तिमात्रा योनिः स्यात्षट्-सप्ताङ्गुलविस्तृता ॥ २७६ ॥
कूर्मपृष्ठोन्नृता मध्ये पार्श्वतश्चांगुलोच्छ्रिता ॥
गजोष्ठसदृशा तद्वदायामच्छिद्रसंयुता ॥ २७७ ॥
एतत्सर्वेषु कुण्डेषु योनिलक्षणमीरितम् ॥
मेखलोपरि सर्वत्र अश्वत्थपत्रसन्निभा ॥ २७८ ॥
वेदी च कोटिहोमे स्यात् वितस्तीनां चतुष्टयम् ॥
चतुरस्रा समा तद्वत्त्रिभिर्विप्रैः समावृता ॥ २७९ ॥
विप्रप्रमाणं पूर्वोक्तं वेदिकायास्तथोच्छ्रयः ॥
ततः षोडशहस्तः स्यान्मण्डपश्च चतुर्मुखः ॥ २८० ॥
पूर्वद्वारेऽपि संस्थाप्य बह्वृचं वेदपारगम् ॥
यजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनम् ॥ २८१ ॥
अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥
अष्टौ तु होमकाः कार्या वेद-वेदाङ्गवेदिनः ॥ २८२ ॥
एवं द्वादश विप्राणां वस्त्रमाल्यानुलेपनैः ॥
पूर्ववत्पूजनं कृत्वा सर्वाभरणभूषणैः ॥ २८३ ॥
रात्रिसूक्तं च सौरं च पावमानं तु मङ्गलम् ॥
पूर्वतो बह्वृचः शान्तिं पावमानमुदङ्मुखम् ॥ २८४ ॥
सूक्तं रौद्रं च सौम्यश्च कूष्माण्डं शान्तिमेव च ॥
पाठयेद्दक्षिणे द्वारे यजुर्वेदिनमुत्तमम् ॥ २८५ ॥
सौपर्णमथ वैराजमाग्नेयीं रुद्रसंहिताम् ॥
पञ्चभिः सप्तभिर्वाथ होमःकार्यश्च पुर्ववत् ॥ २८६ ॥
स्नाने दाने च ये मन्त्रास्त एव द्विजसत्तमाः ॥
ज्येष्ठसाम तथा शान्तिं छन्दोगः पश्चिमे जपेत् ॥ २८७ ॥
स्वविधानं तथा शान्तिमथर्वोत्तरतो जपेत् ॥

---

१. E. F. read आयत° for आयाम°. २. A. E. read शौक्तं for सूक्तं.
३. A. B. E. F. read वैराजः instead of वैराजम्.

वसोर्धाराविधानं तु लक्षहोमवदिष्यते ॥
अनेन विधिना यश्च ग्रहपूजां समाचरेत् ॥ २८८ ॥

सर्वान् कामानवाप्नोति ततो विष्णुपुरं व्रजेत् ॥
यः पठेत् शृणुयाद्वापि ग्रहयागमिमं नरः ॥ २८९ ॥

सर्वपापविनिर्मुक्तः स गच्छेद्वैष्णवं पदम् ॥
अश्वमेधसहस्रं च दश चाष्टौ च धर्मवित् ॥ २९० ॥

कृत्वा यत्फलमाप्नोति कोटिहोमात्तदश्नुते ॥
ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च ॥
नश्यन्ति कोटिहोमेन स्वयम्भुवचनं यथा ॥ २९१ ॥

प्रपेदिरे येऽस्य पितामहाद्याः श्वभ्राणि पापेन गरीयसा तान् ॥
उद्धृत्य नाकं स नयेद्धि सर्वान् यः कोटिहोमं नृपतिः करोति ॥ २९२॥

राष्ट्रं मनोवाञ्छितवृष्टियुक्तं धान्यैश्च रत्नैः पशुभिः समेतम् ॥
निर्द्वन्द्वनीरोगमदस्यु तस्य यो लक्षकोटीहवनं विदध्यात् ॥ २९३॥

यो लक्षकोटिं विदधाति भूभृत् तद्वत्नरो लक्षशतं जुहोति ॥
प्रत्यब्दमाप्नोति स दीर्घमायुर्भुङ्क्ते सपत्नान्विजयी धरित्रीम् ॥ २९४॥

यो ब्रह्मघाती गुरुदारगामी ग्रामादिदाहात् ध्रुवपापयुक्तः ॥
पापैरशेषैः पुरुषो विमुक्तः स कोटिहोमाद्विबुधत्वमेति ॥ २९५ ॥

तस्मात्सदा भूपतयो विदध्युर्वृष्ट्यै प्रजासौख्यबलस्य पुष्ट्यै ॥
आयुः प्रवृद्ध्यै विजयाय कीर्त्यै लक्षादिहोमं ग्रहयागमेतम् ॥ २९६ ॥

इति कोटिहोमविधिः ।

अथान्यत्सम्प्रवक्ष्यामि विधिं पावनमुत्तमम् ॥
अस्मत्तातप्रतीतोऽयं रघुपौत्रस्य धीमतः ॥ २९७ ॥

अनपत्यस्य पुत्रार्थमकरोद्वै भाण्डिकः स्वयम् ॥
सहस्रशीर्षसूक्तस्य विधानं चरुपाककृत् ॥ २९८ ॥

यैर्यैर्नृपैः कृतं पूर्वमन्यैरपि द्विजोत्तमैः ॥
उपासितानि सद्भक्त्या श्रोत्रियैः श्रुतिपारगैः ॥ २९९ ॥

---

१. A. E. and F. read °दाहोग्रव° for °दाहात् ध्रुव.° २. A. B. C. D. read राजा स मुक्तः शतलक्षहोमात् for पापैरशेषैः पुरुषो विमुक्तः. ३. Only D. reads ध्रुवमेति नाकम् for विबुधत्वमेति. ४. A. and C. read °प्रभावोऽयं for °प्रतीतोऽयं; while D. reads °प्रतोषाय for °प्रतीतोऽयं.

आत्मविद्भिर्निराहारैः श्रौतिभिर्मन्त्रचित्तमैः ॥
सिध्यन्ति सर्वमन्त्राणि विधिविद्भिर्द्विजोत्तमैः ॥ ३०० ॥
क्रियमाणाः क्रियाः सर्वाः सिध्यन्ति व्रतचारिभिः ॥
न पाठाच्च धनात् ज्ञानादात्मनः प्रतिपादनात् ॥ ३०१ ॥
प्राक्तनात्कर्मणः पुंसां सर्वाः सिध्यन्ति सिद्धयः ॥
शुक्लपक्षे शुभे वारे शुभनक्षत्रगोचरे ॥ ३०२ ॥
द्वादश्यां पुत्रकामो यश्चरुं कुर्वीत वैष्णवम् ॥
दम्पत्योरुपवासः स्यादेकादश्यां सुरालये ॥ ३०३ ॥
ऋग्भिः षोडषभिः सम्यगर्चयित्वा जनार्दनम् ॥
चरुं पुरुषसूक्तेन श्रपयेत्पुत्रकाम्यया ॥ ३०४ ॥
प्राप्नुयाद् वैष्णवं पुत्रं चिरायुं सन्ततिक्षमम् ॥ ३०५ ॥
द्वादश्यां द्वादश चरून् विधिवन्निर्वपेद्द्विजः ॥
यः करोति महायागं विष्णुलोकं स गच्छति ॥ ३०६ ॥
हुत्वाऽऽज्यं विधिवत्पूर्वं ऋग्भिः षोडशभिस्तथा ॥
समिधोऽश्वत्थवृक्षस्य हुत्वाज्यं जुहुयात्पुनः ॥ ३०७ ॥
उपस्थानं ततः कुर्याद्ध्यात्वा तु मधुसूदनम् ॥
हविर्होमं ततः कृत्वा दद्यात्पञ्च घृताहुतीः ॥ ३०८ ॥
कामप्रदं नमस्कृत्य नारी नारायणं पतिम् ॥
सम्प्राश्य च हविःशेषं वसेल्लब्धाशनी गृहे ॥ ३०९ ॥
ततः कृत्वा इदं कर्म कर्तव्यं द्विजतर्पणम् ॥
रजःस्रोषु निवर्तेत यावद्गर्भं न विन्दति ॥ ३१० ॥
असूता मृतपुत्रा वा या च कन्याः प्रसूयते ॥
क्षिप्रं सा जनयेत्पुत्रं पराशरवचो यथा ॥ ३११ ॥
होमान्ते दक्षिणां दद्यात् गृहं वासस्तथा तिलान् ॥
भूमिं हिरण्यं रत्नानि यथा सम्भवमेव वा ॥ ३१२ ॥
यः सिद्धमन्त्रः सततं द्विजेन्द्रः सम्पूज्य विष्णुं विधिवत्सुतार्थी ॥
इमं विधानं विदधाति सम्यक् स पुत्रमाप्नोति हरेः प्रसादात् ॥३१३॥

इति पुत्रार्थं पुरुषसूक्तविधानम् ।

---

१. F. reads ब्रह्मचारिभिः, D. also the same. २. A. C. read प्रोक्तस्य for प्राक्तनात्. ३. A. C. F. read पुत्रकामाय for पुत्रकामो यः. ४. A. reads इहायाति स विष्णोः परमं पदम् for महायागं विष्णुलोकं स गच्छति. ५. A. B. and C. read हविःशेषं. ६. A. B. D. E. F. read अन्यस्त्रीषु. ७. B. reads प्रसूर्भवेत् for प्रसूयते.

अथातः सम्प्रवक्ष्यामि ग्रहमन्त्राधिदैवतम् ॥
आर्षं छन्दश्च यज्ज्ञानात्कर्म स्यात्सफलं कृतम् ॥ ३१४ ॥
आकृष्णेनेति मन्त्रेऽस्मिन्दैवत्ये सविता महत् ॥
ऋषिर्हिरण्यस्तूपाख्यस्त्रिष्टुप् च्छन्दः प्रकीर्तितम् ॥ ३१५ ॥
आप्यायस्वेति सोमाऽत्र दैवतं गौतमो मुनिः ॥
गायत्री छन्द उद्दिष्टं विनियोगो यथेप्सितम् ॥ ३१६ ॥
अग्निर्मूर्धेति मन्त्रोऽत्र दैवतं भौम उच्यते ॥
विरूपाक्षो मुनिर्धीमान् छन्दो गायत्रमिष्यते ॥ ३१७ ॥
उद्बुध्यस्वेति मन्त्रस्य बुधश्चैव तु दैवतम् ॥
मुनिर्बुधश्च मन्तव्यस्त्रिष्टुप् छन्दः प्रकीर्तितम् ॥ ३१८ ॥
बृहस्पते अतीत्यत्र देवतापि बृहस्पतिः ॥
आर्षं गृत्समदोऽस्येति छन्दस्त्रिष्टुप् प्रकीर्तितम् ॥ ३१९ ॥
शुक्रःशुशुक्केति ह्येत्यत्र शुक्र इत्यधिदैवतम् ॥
शुक्रस्यापि तथार्षं च विराट् छन्दः प्रकीर्तितम् ॥ ३२० ॥
शन्नो देवीति चेत्यत्र शनिर्दैवतमुच्यते ॥
सिन्धुर्नाम ऋषिर्विद्वान् छन्दो गायत्रमुच्यते ॥ ३२१ ॥
काण्डात् काण्डादिति राहुर्दैवतं हि तदुच्यते ॥
ऋषिः प्रजापतिः प्रोक्तोऽनुष्टुप् छन्दः प्रकीर्तितः ॥ ३२२ ॥
केतुं कृण्वन्निति प्रोक्तं दैवतं केतुरेव हि ॥
मधुच्छन्दस आर्षं च गायत्रं छन्द एव हि ॥ ३२३ ॥
स्योनापृथिवीति मन्त्रस्य स्कन्दश्च देवता स्मृता ॥
आर्षं मेधातिथिश्चात्र स्वयम्भूर्दैवतं परम् ॥ ३२४ ॥
भर्गाख्यश्च मुनिश्चात्र बृहती छन्द उच्यते ॥
इन्द्रकुत्सेति दैवत्यं इन्द्र एव स्मृतो बुधैः ॥ ३२५ ॥
आर्षं कुत्सस्य चामुत्र त्रिष्टुप् छन्दः प्रकीर्तितम् ॥
यस्मिन्वृक्षेति चात्रत्र यमो वै देवता परा ॥ ३२६ ॥
ऋषिस्तु कुण्डलोमा च त्रिष्टुप् छन्दः स्मरेद्बुधः ॥
ब्रह्मजज्ञानमित्यत्र कालो वै दैवतं महत् ॥ ३२७ ॥

---

१. A. and E. read कुल्मलो नाम for कुण्डलोमा च, B. the same, F. too while C. reads कुललो नाम and D. कुल्मर्षी नाम.

मुनिर्धर्मतनुर्नाम त्रिष्टुप् छन्दोऽभिधीयते ॥
आयातमिति च ह्यस्यां चित्रगुप्तस्तु दैवतम् ॥ ३२८ ॥
आर्षं तु वामदेवोऽस्य त्रिष्टुप्छन्दो बुधैर्मतम् ॥
अग्निं दूतमिति ह्यस्यां अग्निर्वै देवता स्मृता ॥ ३२९ ॥
आर्षं मेधातिथिर्नाम छन्दो गायत्रमेव हि ॥
अप्सुमे सोम इत्यत्र सोमं वै दैवतं स्मरेत् ॥ ३३० ॥
मेधातिथिरिहाप्यार्षमनुष्टुप् छन्द उच्यते ॥
पुरुषसूक्तस्य दैवत्यं पुरुष एव मतं बुधैः ॥ ३३१ ॥
भूमिपृथिव्यन्तरिक्षमित्यत्र दैवतं क्षितिः ॥
ऋषिः शातातपो ह्यत्र छन्दश्चानुष्टुबुच्यते ॥ ३३२ ॥
आर्षं नारायणस्येह छन्दश्चानुष्टुबित्यपि ॥
इन्द्रायेंदो मरूत्वते मरुत्वान्दैवतं महत् ॥ ३३३ ॥
आर्षं तु काश्यपस्येह गायत्रं च्छन्द एव हि ॥
मरुत्वंतमिति ह्यत्र सुरेन्द्रो देवता मता ॥ ३३४ ॥
अत्रापि कश्यपस्यार्षं गायत्रं छन्द एव हि ॥
उत्तानपर्णइत्यत्र इन्द्रो दैवतमुच्यते ॥ ३३५ ॥
आर्षं साङ्ख्यस्य चात्रोक्तं अनुष्टुप् छन्द इत्यपि ॥
प्रजापते इति ह्यत्र देवता च प्रजापतिः ॥ ३३६ ॥
हिरण्यगर्भस्यार्षं तु त्रिष्टुप् छन्दो मतं बुधैः ॥
आयं गौरिति चैवात्र देवता फणिनो[1] मता ॥ ३३७ ॥
सर्पराज्ञो मुनिस्तत्र गायत्रं छन्द उच्यते ॥
एष ब्रह्मा ऋत्विज इति ब्रह्मदेवोऽधिदैवतम्[2] ॥
ऋषिर्वै वामदेवोऽत्र गायत्रं छन्द इष्यते ॥ ३३८ ॥
आतून इन्द्रवृत्रहं सुरेन्द्रः सगणेश्वरः ॥
तथार्षं वामदेवस्य गायत्रं छन्द इत्यपि ॥ ३३९ ॥
जातवेदस इत्यत्र जातवेदास्तु दैवतम् ॥
काश्यपस्यार्षमत्रापि छन्दोनुष्टुप् प्रकीर्तितम् ॥ ३४० ॥
अनोनियुद्भिरित्यस्मिन्वायुर्दैवतमुच्यते ॥
आर्षमत्र वसिष्ठस्य अनुष्टुप् छन्द उच्यते ॥ ३४१ ॥

---

१. B. C. D. E. and F. read पूजनो for फणिनो. २. E. and F. read द्विषोऽधिदैवतम् for ब्रह्मदेवोऽधिदैवतम्, also this verse is not in B. C. and D.

ऑद्यावाकाशदैवत्यं मुनिः प्रोक्तः प्रजापतिः ॥
छन्दो गायत्रमित्युक्तं विनियोगो यथेप्सितम् ॥ ३४२ ॥

एषो उँषेति चाप्यत्र अश्विनौ दैवते स्मरेत् ॥
प्रस्कण्वश्चार्षमत्रापि ग.यत्रं च्छन्द उत्तमम् ॥ ३४३ ॥

मरुतो यस्य हि क्षये मरुद्दैवतमुच्यते ॥
गौतमं च मुनिं विद्धि च्छन्दश्च प्रथमं मुने ॥ ३४४ ॥

छन्दस्तथार्षं सहदैवतेन ज्ञात्वा द्विजो यः कुरुते विधानम् ॥
वेदोक्तमर्थं प्रददाति सम्यक् सर्वं फलं कर्तुरिहाप्यमुत्र ॥ ३४५ ॥

यो लक्षहोमं यदि कोटिहोमं राजा विदध्यात्प्रतिवर्षमेकम् ॥
राष्ट्रे सुवृष्टिर्विजयः सुभक्ष्यमारोग्यता स्यात्सुकृतस्य वृद्धिः ॥ ३४६ ॥

भवन्ति पुत्राः शुभवंशवृद्ध्यै दीर्घायुषो राजहिता धरित्र्याम् ॥
सुकीर्तिमन्तो जयिनोऽपि राज्ये प्रतापवन्तो रवि-चन्द्रतुल्याः ॥ ३४७ ॥

इति श्रीबृहत्पाराशरीये धर्मशास्त्रे शान्तिविधिर्नाम एकादशोऽध्यायः समाप्तः ॥ ११ ॥

---

१. A. reads अथवा इत्याकाशो देवता आर्षमेव तत् or आदित्यआकाश दैवत्यं; while C. reads नमः प्रकाशदैवत्यं. २. B. C. D. E. F. read इषो उपेति for एषो उषेति. ३. A. reads °संततिक्षमा for °वंशवृद्ध्यै.

# बृहत्पराशरसंहिता।

## ॥ अथ द्वादशोऽध्यायः ॥

अथातो नृपतेर्धर्मं वक्ष्यामि हितकाम्यया ॥
पराशरात् श्रुतं विप्रा वक्ष्यमाणं निबोधत ॥ १ ॥

भूभृद्भूमौ परो देवः पूज्योऽसौ परदेववत् ॥
स विधातापि सर्वस्य रक्षिता शासिता च सः ॥ २ ॥

इन्द्रा-ऽग्नि-यम-वित्तेशा-ऽनलेश-मातरिश्वनः ॥
शीतांशुस्तीव्रभासश्च ब्रह्माद्योऽसृजन्नृपम् ॥ ३ ॥

नृपो वेधा नृपः शम्भुर्नृपोऽर्को विष्टरश्रवाः ॥
दाता हर्ता नृपः कर्ता नृणां कर्मानुसारतः ॥ ४ ॥

नासृक्ष्यद्यदि राजानं नापि दण्डं व्यधास्यत ॥
नाभंस्यतो यदा चैषा का भविष्यज्जगत्स्थितिः ! ॥ ५ ॥

नाग्रहीष्यन् पुरोडाशान् मनुष्य-पितृ-देवताः ॥
नाभविष्यत् श्व-काकानां भागधेयं हुतं हविः ॥ ६ ॥

निर्गुणोऽपि यथा स्त्रीणां सदा पूज्यः पतिर्भवेत् ॥
तथा राजापि लोकानां पूज्यः स्याद्विगुणोऽपि सन् ॥ ७ ॥

स्वकर्मस्थान्नृपो लोकान् पिता पुत्रानिवौरसान् ॥
शिक्षयेत् धर्मविद्दण्डैरधर्मकारिणो जनान् ॥ ८ ॥

नरान् दण्डधृतः कुर्यात् धर्मज्ञानार्थसाधकान् ॥
समर्थानश्वपत्यादीन्शूरान् स्वामिहितोद्यतान् ॥ ९ ॥

शुचीन् प्राज्ञान् स्वधर्मज्ञान् विप्रान् मुद्राकरान् हितान् ॥
लेखकानपि कायस्थान् लेख्यकृत्यविचक्षणान् ॥ १० ॥

अमात्यान् मन्त्रिणो दूतान् यथोदितपुरोहितान् ॥
प्राड्विवाकान् समस्तान् वा हितांश्च रक्षकानपि ॥ ११ ॥

---

१. A. B. D. E. and F. read शीतांश्चांशानभासाश्च for शीतांशुस्तीव्रभासश्च.

२. A. B. read दण्डंनाप्यकारेष्यत्तु for नापि दंडं व्यधास्यत.

शूरानर्थ शुचीन् प्राज्ञान् परविश्वासकारिणः ॥
सर्वस्थानेषु चाध्यक्षान् सत्कृत्य वेदिनो परे ॥ १२ ॥
महायत्नः कुमाराणामन्तःपुरस्य रक्षणे ॥
वृद्धान् कञ्चुकिनो विप्रा : शुचीनाढ्यांश्च वीरकान् ॥ १३ ॥
यथोदितानि दुर्गाणि कुर्यात्तेष्वपि रक्षणम् ॥
उद्वाहमुदितं स्त्रीणां यौनसम्बन्धकारणात् ॥ १४ ॥
सुगुप्तकृत्यविज्ञानमात्मरक्षा प्रयत्नतः ॥
प्रातः सन्ध्यार्चनादूर्ध्वं गूढपुंवचनश्रुतिः ॥ १५ ॥
यथोक्तकार्ये राज्ये च नित्यं कुर्यात्परीक्षणम् ॥
कोशेभाश्व-रथादीनां हेतीनां वर्मणामपि ॥ १६ ॥
कुर्यादालोकनं नित्यमनालस्यो महीपतिः ॥
अमात्य मन्त्रि-योद्धॄणां सम्मानं नित्यशोऽपि च ॥ १७ ॥
देवार्चनं सदा होमः शान्तिश्च वृद्धसेवनम् ॥
यज्ञो दानं तथोत्पातसमये शान्तयोऽपि च ॥ १८ ॥
वर्जनं विषयासक्तेर्भूमिदानं सशासनम् ॥
प्राणिवर्जितदेशे च नीतिज्ञो मन्त्रकृद्भवेत् ॥ १९ ॥
नित्यमुत्साहयुक्तश्च विजिगीषुरुदायुधः ॥
सदालङ्कारयुक्तश्च सदैव प्रियभाषकः ॥ २० ॥
सदा प्रियाहते युक्तः पूज्यो नाकेऽप्यसौ नृपः ॥
सदा साधुषु सन्मानं विपरीतेषु घातनम् ॥ २१ ॥
दण्डं दम्येषु कुर्वाणो राजा यज्ञफलं लभेत् ॥
वृद्धान् साधून् द्विजान् मौलान् यो न सन्मानयेन्नृपः ॥ २२ ॥
पीडां करोति चमीषां राजा शीघ्रं क्षयं व्रजेत् ॥
यस्तु सन्मानयेदेतान् देवान् विप्रांश्च पूजयेत् ॥ २३ ॥

---

१. A. B. D. E. and F. read भावयान् instead of अथ. २. A. C. D. F. read सुभीरुकान् for °श्च वीरकान्. ३. Only C. reads यौवने बंधुकारणात् for यौनसंबंधकारणात्. ४. A. D. F. read गुप्तपुंकृत° for सुगुप्तकृत्य. ५. A. reads गुप्त° for गूढ°; while B. and E. read गूढपुंवचनश्रुतिः and D. F. read गूढपुंसवनश्रुतिम्. ६. E. and F. read चर्मणाम् instead of वर्मणाम्. ७ B. C. D. E. and F. read प्रजा° for प्रिय°. ८. A. B. D. E. and F. substitute दंडयेषु for दम्येषु. ९. Only A. reads इष्ट° for यज्ञ.° १०. A. reads मौलीन for मौलान्.

पराजयेत्सोप्यरींस्तान् दीर्घायुरपि जायते ॥
पीड्यमानां प्रजां रक्षेत्कायस्थैश्चोरै तस्करैः ॥ २४ ॥
धान्येक्षु-तृण-तोयैश्च सम्पन्नं परमण्डलम् ॥
हीनवाहनपुंस्त्वं तु मत्वैतत्प्रविशेन्नृपः ॥ २५ ॥
मासे सहसि यात्रार्थी कृतपुण्याहघोषवान् ॥
विधिवद्यानकं कुर्याद्व्यूहैरक्षयन् बलम् ॥ २६ ॥
यत्राचलसरोरक्षा वृक्षरक्षा तु यत्र च ॥
वासं तत्रविधायैव रात्रौ रक्षेत्स्वकं बलम् ॥ २७ ॥
चतुर्दिक्षु च सैन्यस्य निशि शूरान् धनुर्धरान् ॥
स्वयं राजा नियुञ्जीत समीक्ष्य भूबलाबलम् ॥ २८ ॥
राज्यस्य षड्गुणान् मत्वा सन्धिविग्रहयानकान् ॥
आसनं संश्रयं द्वैधं सम्यक् ज्ञात्वा समाचरेत् ॥ २९ ॥
निर्भेदं स्वबलं कुर्यान्निहन्याद्भिन्नचेतनम्
दासीकर्मकरान् दासान् भिन्दतो रक्षयेन्नृपः ॥ ३० ॥
निकटस्थायिनो नित्यं जानन्ति चेष्टितं प्रभोः ॥
तस्मात्ते यत्नतो रक्ष्या भेदमूलं यतस्त्वमी ॥ ३१ ॥
एते परस्य यत्नेन भेदनीयास्ततोऽपरे ॥
यथा परो न जानाति तथा भेदं समाचरेत् ॥ ३२ ॥
परामात्य-प्रधानानां व्यलीककूतशब्दितम् ॥
उत्थापयेत्स्वसेनायाः स्याद्यथा चित्तभेदना ॥ ३३ ॥
परसैन्ये बहु गतान्विविधान् कुहकानपि ॥
कारयेत् गरदानादि वह्निपातननेकशः ॥ ३४ ॥
स्वसैन्ये गरदानादि नृपो यत्नेन रक्षयेत् ॥
नियुज्य विज्ञः पुरुषानुक्तं सर्वं निशामयेत् ॥ ३५ ॥

---

१. A. B. D. read °चाट° for चोर°. २. B. only reads °कुतृण° for °क्षु-तृण°. ३. A. B. D. E. read प्रयाणं विधिवत् for विधिवद्यानकं. ४. A. B. D. E. and F. read °सरित्° for °सरो°. ५. Only A. reads सन्यस्य for सैन्यस्य. ६. A. reads संशयद्वैधं and B. D. E. F. read संश्रयेत् द्वैधं. ७. B. E. and F. read भूमन्वेतनम् and D. reads भूतन्वेदसम्. ८. B. and E. read शब्ददूषितम्. ९. A. reads श्चित्तभेदिता, B. श्चित्तभेदिना, D. reads श्चित्तवेदिता and F. reads श्चित्तभेदता for श्चित्तभेदना. १०. A. reads कारिणां for कारयेत्, C. and D. also read as A. ११. A. and C. read ऽभवदित्यादि for गरदानादि.

अन्तर्भीरून् बहिः शूरान् साग्निकान् ब्राह्मणोत्तमान् ॥
धर्मज्ञान् कुल-सम्पन्नान् बिभृयादात्मसन्निधौ ॥ ३६ ॥
प्रविशन् परदेशे च प्रजां स्वीकृत्य संविशेत् ॥
उत्सार्य मार्गतो लोकान् दूरीकृत्य व्रजेन्नृपः ॥ ३७ ॥
सस्यादि दाहयेत्सर्वं यवसानि धनानि च ॥
भिन्द्यात्सर्वनिपानानि प्राकारान्परिखास्तथा ॥ ३८ ॥
अपसृत्य समादाय भूमिं साधारणां नृपः ॥
गमयेत् वार्षिकान्मासानासौद्य स्वधरां नृपः ॥ ३९ ॥
न युद्धमाश्रयेत्प्राज्ञो न कुर्यात्स्वबलक्षयम् ॥
साम्ना भेदेन दानेन त्रिभिरेव वशं नयेत् ॥ ४० ॥
वदन्ति सर्वे नीतिज्ञा दण्डस्याऽगतिका गतिः ॥
तद्वर्जे वशमायाति यथा शत्रुस्तथा चरेत् ॥ ४१ ॥
आक्रान्ता दर्भसूच्योऽपि भिंद्युर्मृद्व्योऽपि भूतलम् ॥
नातो यतेत युद्धाय युद्धसिद्धिरसिद्धिवत् ॥ ४२ ॥
स्वधरात्यन्तिके देशे युद्धमिच्छेत्स्वधर्मवित् ॥
न तु प्रविश्य तद्दूरभूमिं युद्धं समाचरेत् ॥ ४३ ॥
किञ्चित्सुप्तेषु लोकेषु क्षपायां युद्धमाचरेत् ॥
सुघोरव्यसने चापि योधयेत्परसैनिकैः ॥ ४४ ॥
व्यूहैर्व्यूह्य यथोक्तैर्वा रक्षां कृत्वापि चात्मनः ॥
सैनिकांस्तान् समस्तांश्च प्रेरयेद्युद्धवित्नृपः ॥ ४५ ॥
सम्मानयेत्समस्तांश्च योद्धृन्सेनापतीन्नृपः ॥
अन्विच्छन् जयलक्ष्मीं च नीतिज्ञः पृथिवीपतिः ॥ ४६ ॥

---

१. A. B. D. E. and F. read साकारान् for साग्निकान्. २. A. C. D. differ in reading this line as- उत्सार्य मार्गतो दुरीकृत्यापि मार्गशोधनम्, C. substitutes उत्सार्यं for उत्सार्य and कृत्वापि for कृत्यापि and मार्गतो व्रजेत् for मार्गशोधनम्, ३. C. reads सपवानि for यवसानि. ४. A. B. D. E. F. read असौ च वसुधाधिपः for आसाद्य स्वधरां नृपः. ५. A. B. D. E. F. read राजा for प्राज्ञः. ६. Only C. reads विद्युद्भ्रोपपातनम्. ७. B. E. both read स्वधामा° for स्वधरा°; while C. reads स्वस्थस्यात्ययिके for स्वधरात्यंतिके. ८. A. reads उत्सहेत् for आचरेत्, C. reads उत्सृजेत्, D. as A. ९. A. reads °वासतो for °व्यसने, C. reads सत्नीरवासतो, D. E. and F. as A. १०. C. reads यो वसेशयतो नृपः.

स्नेहेनापि समं पत्न्या शय्यास्थोऽपि हि मानवः ॥
पुष्पैरपि न युध्येत युद्धं तत्र विपत्तये ॥ ४७ ॥
हीनं परबलं मत्वा निरुत्साहमनादरम् ॥
समस्तबलसंयुक्तः स्वयमुत्थाप्य योधयेत् ॥ ४८ ॥
न हन्यात् मुक्तकेशं च नाशयेन्न निरायुधम् ॥
पराङ्मुखं न पतितं न तवास्मीति वादिनम् ॥ ४९ ॥
अन्यानपि निषिद्धांश्च न हन्याद्धर्मविन्नृपः ॥
हत्वा च नरकं यान्ति भ्रूणहत्यासमैनसा ॥ ५० ॥
पराङ्मुखीकृते सैन्ये यो युद्धान्न निवर्तते ॥
तत्पदानीष्टितुल्यानि भूम्यर्थं स्वामिनोऽपि वा ॥ ५१ ॥
शिरोहतस्य ये वक्त्रे विशन्ति रक्तबिन्दवः ॥
सोमपानेन ते तुल्या इति वासिष्ठजोऽब्रवीत् ॥ ५२ ॥
युध्यन्ते भूभृतो ये च भूम्यर्थमेकचेतसः ॥
इष्टस्तैर्बहुभिर्यागैरेवं यान्ति त्रिविष्टपम् ॥ ५३ ॥
एष एव परो धर्मो नृपतेर्यद्रणार्जितम् ॥
विप्रेभ्यो दीयते वित्तं प्रजाभ्यश्चाभयं तथा ॥ ५४ ॥
यदा तु वशतां याति स देशो न्यायतोऽर्जितः ॥
तद्देशव्यवहारेण यथावत्परिपालयेत् ॥ ५५ ॥
रणार्जितेन वित्तेन राजा कुर्यान्मखान्द्विजान् ॥
अर्चयेद्विधिवद्राजा साधून् सम्मानयेदपि ॥ ५६ ॥
मातुलः श्वशुरो बन्धुरन्यो वापि हि यो जितः ॥
अदण्ड्यः कोऽपि नास्त्येवं राजनीतिविदो विदुः ॥ ५७ ॥
सुसहायमतिप्रौढं शूरं प्राज्ञानुरागदम् ॥
सोत्साहं विजिगीषुं च मत्वा राजा नियामयेत् ॥ ५८ ॥

---

१. A. reads नासीनं न, for नाशयेन्न. B. too the same. D. E. F. also the same. २. A. and C. read प्रहतं for पतितं. ३. C. only reads युद्धाय for युद्धान्न. ४. B. and F. read पदानि क्रतु° for तत्पदानीष्टि°. ५. A. reads चैकचेतसः for स्वामिनोऽपि वा, C. reads भूत्यर्थं चैकचेतसः, D. also as C. ६. A. C. D. E. F. read विद्वान् for राजा. ७. Only C.; reads सतान् for साधून्. ८. A. B. D. E. F. read ऽर्चितः for जितः. ९. A. reads नो राज्ञो for नास्त्येव. १०. A. and C. read भूभृत्क्षिप्रं for मत्वा राजा, also E. and F. read the same.

मत्वा चार्थवेतः सर्वान् युक्तानप्यर्थकृद्भवेत् ॥
सार्थकांश्च नियुञ्जीत सर्वतोऽर्थमुपार्जयेत् ॥ ५९ ॥
सर्वाण्यपि च वित्तानि यतस्ततोऽपि राजनि ॥
प्रविशंतीव तोयानि सर्वाण्यपि हि सागरे ॥ ६० ॥
नृपस्यापदि जातायां द्रव्याणि कोशवत् ॥
आदाय रक्षेदात्मानं पुनस्तत्र च निःक्षिपेत् ॥ ६१ ॥
वित्तं वार्धुषिकाणां तु कदर्यस्यापि यद्धनम् ॥
पाषण्डि-गणिकावित्तं हरन्नार्तो न किल्विषी ॥ ६२ ॥
देव-ब्राह्मण-पाषण्डि-गणका-गणिकाद्यः ॥
वणिग्वार्धुषिकाः सर्वे स्वस्थे राजनि सुस्थिताः ॥ ६३ ॥
यथा वह्निश्च गोमांसं दहन्नपि न पातकी ॥
आददानस्तथा राजा धनमार्तो न किल्विषी ॥ ६४ ॥
गृह्णीयात्सर्वदा राजा करानपीडयन्प्रजाः ॥
स्तोके स्तोकान् पृथक् साम्ना स भुङ्क्ते सुचिरं धराम् ॥ ६५ ॥
सदा चोद्यमिना भाव्यं नृपेण विजिगीषुणा ॥
विजिगीषुर्नृपो नान्यैः कदाचिदभिभूयते ॥ ६६ ॥
तदेवं हृदि सन्धाय धृतोत्साहो नृपो भवेत् ॥
दैव-पौरुषसंयोगे सर्वाः सिद्ध्यन्ति सिद्धयः ॥ ६७ ॥

नैकेन चक्रेण रथः प्रयाति नचैकपक्षो दिवि याति पक्षिः ॥
एवं हि दैवेन न केवलेन पुंसोऽर्थसिद्धिर्नरकारतो वा ॥ ६८ ॥
केचिद्धि दैवस्य तु केवलस्य प्राधान्यमिच्छन्ति मतिप्रवीणाः ॥
पुंस्कारयुक्तस्य नरस्य केचिद्प्यत्र दृष्टा पुरुषार्थसिद्धिः ॥ ६९ ॥

अत्युच्च-नीचकृतहेतिपरिश्रमी च
शौर्यान्वितश्च गुणवांश्च सुधीश्च विद्वान् ॥
प्राप्नोति नैव विधिना स पराङ्मुखेन
स्वीयोदरस्य परिपूरणमन्नमात्रम् ॥ ७० ॥

---

१. A. reads °मतः सर्वानयुक्तानर्थकृद्भवेत्. B. reads °हृद्भवेत् for °कृद्भवेत्. C. reads नियुक्तार्थमियुक् भवेत्, D. न नियुक्तानप्यहृद्भवेत्. २. B. reads भार्तो for मार्तो. ३. B. and D. read °गायका-गणकाद्यः for °गणका°-गणिकाद्यः. ४. A. reads दृष्टा. ५. B. E. read अत्युद्यमी for अत्युच्चनी.°

शुभ्राणि हर्म्याणि वराङ्गनाश्च नानाप्रकारो विभवो नरस्य ॥
उर्वीपतित्वं नृपकारता च सर्वं हि मंक्षु क्षयमेति दैवात् ॥ ७१ ॥
केषां हि पुंसां महतो हि दैवात्स्थानस्थितानामपि चार्थसिद्धिः ॥
केषां प्रभुत्वं बहुजीवितं च एको हि दैवो बलवानतोऽत्र ॥ ७२ ॥
पुं-स्त्रीप्रयोगादथशुक्र-शोणितात् को देहमध्ये विदधाति गर्भं ॥
स्त्रीणां तु तद्विप्र न चापि पुंसां सर्वापि चैषा ननु दैवचेष्टा ॥ ७३ ॥
कासां तु गर्भस्य न सम्भवोऽस्ति केषां च शुक्रं ननु वीर्यहीनम् ॥
दधाति गर्भं ननु कापि दैवात् काश्चित्तु गर्भं न दधाति दैवात् ॥ ७४॥
धाता विधाता निजकर्मयोगात् विधेस्त्वभीष्टं त्वनुभावभाव्यम् ॥
देवासुराणां सह दैत्यकानां स ह्येव कर्ता च मनून्द्रवानाम् ॥ ७५ ॥
दैवात् मघोनोऽपि सहस्रमक्ष्णां दैवाद्धिमांशोः क्षयरोगिताऽभूत् ॥
दैवात्पयोधेर्लवणोदकत्वं दैवाद्भवेच्चित्रतरा च वृष्टिः ॥ ७६ ॥
यद्यप्यमुष्मात्र परोऽस्ति दैवात् कुर्यात्तथापीह नरो नृकारम् ॥
उद्दीपयेत्कर्मकरो नृकारादुद्दीपितं कर्म करोति लक्ष्मीः ॥ ७७ ॥
दैवेन केचित्प्रसभेन केचित्केचिन्नृकारेण नरस्य चार्थाः ॥
सिध्यन्ति यत्नेन विधीयमानास्तेषां प्रधानं नरकारमाहुः ॥ ७८ ॥
स्वामिः प्रधानं नय-दुर्ग-कोशान् दण्डं च मित्राणि च नीतिविज्ञाः ॥
अङ्गानि राज्यस्य वदन्ति सप्त सप्ताङ्गपूर्वो नृपतिर्धराभुक् ॥ ७९ ॥
दुर्वृत्त-सद्वृत्तनरेषु दण्डं राजा विधत्ते निपुणोऽर्थसिध्यै ॥
दण्डस्य मत्वोर्जितवित्तसत्वं पुंसोऽर्थहीनस्य दमं तु हीनम् ॥ ८० ॥
अन्यायतो ये तु जनं नरेशाः सम्पीड्य वित्तानि हरन्ति लोभात् ॥
तत्क्रोधवन्हौ परिदग्धदेहा गतायुषस्ते तु भवन्ति भूपाः ॥ ८१ ॥

---

१. A. B. D. and E. अकृतो for महतो. २. D. reads °शुक्रसेकात्. ३. C. reads अधत्तगर्भापि जहाति गर्भं. ४. A. reads विधिस्त्वदृष्टं तनुभोगभाग्यम्, B. विधिस्त्वदृष्टस्तनुभावभाव्यः, D. विधेस्त्वदृष्टं त्वनुभाव्यभाग्यम्. ५. A. reads देवोरगाणां. D. E. F. also the same. ६. B. reads वै नराणां for दैत्यकानां. ७. B. reads °गामिता for °रोगिता. D. and E. also read as B. ८. A. B. D. E. and F. read नरो for °करो. ९. A. reads श्रीर्वितनोति सद्यः. B. simply alters तनोति for करोति in the original, C. reads श्रीरिव वै तनोति, D. E. and F. as A.; १०. A. reads कृतकेन, C. स्वहठेन and D. महर्षेन for प्रसभेन. ११. C. reads भज for नय.° १२. A. reads हीनार्थपुंसस्तु दमं तु हीनम्, and C. दमान्ति हीनम्. १३. C. reads °वृद्ध्या for °वन्हौ. १४. B. reads गतायुषः for क्षीणायुषः.

दण्डो महान् मध्यमकाधमस्तु मानं तु तेषां त्रसरेणुकादि ॥
सोऽशीतिसाहस्रपणो महान् स्यादर्धोऽर्द्धको तस्य तदर्धको वा ॥८२॥

सर्वार्थपादश्च हरश्च दण्डौ पात्यौ नृपेणेति वदन्ति सन्तः ॥
पाण्यादिपच्छेदन-मारणं च निर्वासनं राष्ट्रत एव सद्यः ॥ ८३ ॥

ज्ञात्वापराधं मनुजस्य यस्तु देशं च कालं च वपुर्वयश्च ॥
दंड्येषु दण्डं विदधाति भूभृत् साम्यं स बध्नाति पुरन्दरस्य ॥ ८४ ॥

यः शास्त्रदृष्टेन पथा नरेशो दण्डं विदध्याद्विधिवत्करांश्च ॥
सोऽतीव कांतिं वितनोति गुर्वीं आयुश्च दीर्घं दिवि देवभोगान् ॥८५॥

यस्त्यक्तमार्गाणि कुलानि राजा श्रेणीश्च जातीश्च गणांश्च लोकान् ॥
आनीय मार्गे विदधाति धर्म्ये नाकेऽपि गीर्वाणगणैः प्रशस्यते ॥८६॥

य: स्वधर्मे स्थितो राजा प्रजाधर्मेण पालयेत् ॥
सर्वकामसमृद्धात्मा विष्णुलोकमवाप्नुयात् ॥ ८७ ॥

हर्यश्व-वन्हि-यम-वित्तनाथ-शीतांशुरूपाणि हि बिभ्रतीह ॥
सर्वेऽपि भूपास्त्विह पञ्चरूपास्तं कथ्यमानं शृणुत द्विजेन्द्राः ॥ ८८ ॥
यदा जिगीषुर्धृतशस्त्रपाणिस्त्विवपुं समालम्ब्य स विद्धसैन्यः ॥
सर्वान् सपत्नानिह जेतुकामस्तदा स हर्यश्व इवेह भाति ॥ ८९ ॥
अकारणात्कारणतोऽपि चैव प्रजां दहेत्कोपसमिद्धरोचिः ॥
यदा तदेनं नृपनीतिविज्ञास्तनूनपातं प्रवदन्ति भूपम् ॥ ९० ॥
धर्मासनस्थः श्रुतिशास्त्रदृष्ट्या शुभाशुभाचारविचारकृत्स्यात् ॥
धर्म्येषु दानं त्वघकृत्सु दण्डं तदा ऽवनीशास्त्विह धर्मराजः ॥ ९१ ॥
यदा त्वमात्य-द्विज-याचकादीन् प्रहृष्टचित्तस्तु यथोचितेन ॥
धनप्रदानेन करोति हृष्टान् भूभृत्तदाऽसौ द्रविणेशवत्स्यात् ॥ ९२ ॥
समस्तशीतांशुगुणप्रयुक्तो यदा प्रजामेष शुभाय पश्येत् ॥
प्रसन्नमूर्तिर्गतमत्सरः सन् तदोच्यते सोम इति क्षितीशः ॥ ९३ ॥
आज्ञा नृपाणां परमं हि तेजो यस्तां न मन्येत स शस्त्रवध्यः ॥
ब्रूयाच्च कुर्याच्च वदेच्च भूभृत्कार्यं तदेवं भुवि सर्वलोकैः ॥ ९४ ॥

---

१. C. reads अर्धाद्विके for अर्धोर्धको. २. A. B. D. E. F. read तदन्वकौ च for तदर्द्धको वा. ३. B. E. read वरांश्च for करांश्च. ४. C. reads नागेश° for नाकेऽपि. ५. F. reads °विष्णु° for °वन्हि.° ६. C. reads स्त्रियं for °स्त्विवपुं.° ७. A. B. C. D. E. and F. भिन्नसैन्यः for विद्धसैन्यः. ८. B. E. F. read °प्रयुक्तं for °प्रयुक्तो.

दुर्धर्षतिग्मांशुसमानदीप्तिर्भूपान् मनुष्यः परुषं नृपस्य ॥
यस्तस्य तेजोऽप्यवमन्यमानः सद्यः स पंचत्वमुपैति पापात् ॥ ९४ ॥
योऽन्वाय सर्वं विदधाति पश्येत् शृणोति जानाति चकास्ति शास्ति ॥
कस्तस्य चाज्ञां न बिभर्ति राज्ञः समस्तदेवांशभवो हि यस्मात्॥९५॥

इति राजधर्मः ।

अथ विप्रो वनं गच्छेद्विना वा सहभार्यया ॥
जितेन्द्रियो वसेत्तत्र नित्यं श्रौताग्निकर्मकृत् ॥ ९६ ॥
वन्यैर्मुन्यशनैर्मेध्यैः श्यामा-नीवार-कङ्गुभिः ॥
कन्द-मूल-फलैः शाकैः स्नेहैश्च फलसम्भवैः ॥ ९७ ॥
सायं-प्रातश्च जुहुयात्त्रिकालं स्नानमाचरेत् ॥
चर्मचीवरवासाः स्यात् श्मश्रु-लोम-जटाधरः ॥ ९८ ॥
पितॄंश्च तर्पयेन्नित्यं देवांश्चाजस्रमर्चयेत् ॥
अर्चयेदतिथीन्नित्यं तथा भृत्यांश्च पोषयेत् ॥ ९९ ॥
न किञ्चित्प्रतिगृह्णीयात्स्वाध्यायं नित्यमाचरेत् ॥
सर्वसत्त्वहितो दान्तः शान्तश्चाध्यात्मचिन्तकः ॥ १०० ॥
सन्तुष्टस्वान्तको नित्यं दानशीलः सदा द्विजः ॥
कश्चिद्वेदं समाम्नाय सुवृत्त्या वर्तयेत्सदा ॥ १०१॥
एकाह्निकं तु कुर्वीत मासिकं वाथ सञ्चयम् ॥
षाण्मासिकं चाब्दिकं वा यज्ञार्थं च वने वसन् ॥ १०२ ॥
त्यक्त्वा तदाश्विने मासि स्थानमन्यत्समाश्रयेत् ॥
यथावदग्निहोत्रं तु समिदाज्यैस्तु पालयेत् ॥ १०३ ॥
चान्द्र-कृच्छ्र-पराकाद्यैः पक्ष-मासोपवासकैः ॥
त्रिरात्रैरेकरात्रैश्च आश्रमस्थः क्षिपेद्बुधः ॥ १०४ ॥
तिष्ठेत्प्रातिकस्तत्र स्वप्याद्धस्तथा निशि ॥
अतन्द्रितो भवेन्नित्यं वासरं प्रपदैर्नयेत् ॥ १०५ ॥

---

१. A. reads °कर्मवित् for °कर्मकृत्. २. C. reads सन्यस्तश्चान्तको and B. सन्तुष्टस्यान्तको respectively. ३. A. B. D. E. F. substitute सद्वृत्त्या for सुवृत्त्या. ४. D. reads समिदाद्यैः for समिदाज्यैः. ५. A. and D. read द्व्येकरात्रैश्च for एकरात्रैश्च.

योगाभ्यासरतो नित्यं स्थानाऽऽसन-विहारवान् ।।
हेमन्त-ग्रीष्म-वर्षासु जलाग्न्याकाशमाश्रयेत् ।।१०६।।
दन्तोलूखलिको वापि कालपक्वभुगेव वा ।।
स्यादश्मकुट्टको विप्रः फलस्नेहैश्च कर्मकृत् ।। १०७ ।।
शत्रौ मित्रे समस्वान्तस्तथैव सुख-दुःखयोः ।।
समदृष्टिश्च सर्वेषु न विशेद्वनगह्वरम् ।। १०८ ।।
म्लेच्छव्याप्तानि सर्वाणि वनानि स्युः कलौ युगे ।।
न भूपाः शासितारश्च ग्रामोपान्ते वसेदतः ।। १०९ ।।
ग्रामाश्च नगरादेशास्तथारण्य-वनानि च ।।
क्षितीशरक्षितान्येव सर्वेषां फलदानिहि ।। ११० ।।
प्रथमं भूपतेस्तस्मात्कृत्यं शंसेद्द्विजाग्रजाः ।।
योगं वाऽरण्यवासं वा कुर्वीत तदनुज्ञया ।। १११ ।।
सुत्रामा-ऽनल-वायूनां यमस्येन्दोर्विवस्वतः ।।
ईशं-वित्तेशयोर्ब्रह्ममात्राभ्यो निर्मितो नृपः ।। ११२ ।।
पारत्रिकं तु यत्किञ्चिद्यत्किञ्चिदैहिकं तथा ।।
नृपाज्ञया द्विजातीनां तत्सर्वं सिध्यति ध्रुवम् ।। ११३ ।।
नृपतेः प्रथमं तस्मात् साधोर्यज्ञादिकं द्विजः ।।
रक्षार्थं कथयित्वा तु यथा कार्यं समापयेत् ।। ११४ ।।
धेनुः पूर्वं वसिष्ठस्य ह्यासीद्दुर्वाससोऽपि च ।।
वनवासाश्रमस्थस्य वह्निकार्याय तां श्रयेत् ।। ११५ ।।
फलस्नेहा यदा न स्युः कालवैगुण्यतो द्विजाः ।।
तदा गोदुग्ध-सर्पिभ्यामग्निकार्यं समापयेत् ।। ११६ ।।
तथा सर्वेषु कालेषु तथा सर्वाश्रमेषु च ।।
गोदुग्धादि पवित्रं स्यात्सर्वकार्येषु सत्तमाः ।। ११७ ।।
वनवासिषु सर्वेषु भिक्षां कुर्याद्वनाश्रमी ।।
तदा सर्वं प्रकुर्वीत पितृदेवार्चनादिकम् ।। ११८ ।।

---

१. A. reads ग्रामप्रवासादिकं चरेत् for जलाग्न्याकाशमाश्रयेत्. २. C. reads °पक्ष° for °पक्व°. ३. A. reads निवसेद्गह्वरं वनम्; while B. D. E. read निवासं गह्वरं वनम्. ४. A. C. D. read इन्द्र° for ईश.° ५. A. reads दैविकं for ऐहिकं. B. D. E. and F. too read the same. ६. D. reads वनवासाय for वह्निकार्याय.

अष्टौ भुञ्जीत वा ग्रासान् ग्रामादाहृत्य यत्नवान् ॥
वासनासंक्षयं गच्छेदनिलाशः प्रागुदीचिकः ॥ ११९ ॥

विधाय विप्रो वनवासधर्मान् सर्वानिमानुक्तविधिक्रमेण ॥
स शोध्य पापानि वपुर्विशोध्य ब्रह्माधिगच्छेत्परमं द्विजेन्द्राः ॥१२०॥

आश्रमत्रयधर्मान्वा चरित्वा प्राक् द्विजास्ततः ॥
द्वयस्य वा ततः पश्चाच्चतुर्थाश्रममाचरेत् ॥ १२० ॥

द्विजाग्रजो यदा पश्येत् वलीपलितमात्मनः ॥
उपरामस्तथाक्षाणां क्षैण्यं कामस्य सद्द्विजाः ॥ १२१ ॥

समीक्ष्य पुत्रं पौत्रं वा दृष्ट्वा वा दुहितुः सुतम् ॥
अधीत्य विधिवद्वेदान् कृत्वा यज्ञान्विधानतः ॥ १२२ ॥

निश्चयं मनसः कृत्वा चतुर्थाश्रममाविशेत् ॥
प्राजापत्यां विधायेष्टिं वनाद्वा सद्मनोऽपि वा ॥ १२३ ॥

समस्तदक्षिणायुक्तान् सर्ववेदांस्ततश्च तान् ॥
अग्नीनात्मनि चारोप्य दण्डान् विधिवदाहरेत् ॥ १२४ ॥

किञ्चिद्भेदं समास्थाय तद्धर्मेण च वर्तयेत् ॥
वाङ्-मनः-कायदण्डाश्च तथा सत्वादयो गुणाः ॥ १२५ ॥

त्रयोऽपि नियता यस्य स त्रिदण्डीति कथ्यते ॥
कमण्डल्वक्षमाला च भिक्षापात्रमथापरम् ॥ १२६ ॥

काषायवासः कौपीनं कार्यार्थं वस्त्रमेव वा ॥
शिखा यज्ञोपवीतं च दण्डानां त्रितयं तथा ॥ १२७ ॥

त्रिकालं विधिवत्स्नानं भिक्षया चैकभोजनम् ॥
शुद्धैकवृत्तिविप्रेषु सत्कर्मनिरतेषु च ॥ १२८ ॥

भिक्षाचर्या यतेः प्रोक्ता व्रतचर्या तथैव च ॥
असम्भाषश्च शूद्रेण तथा च शिल्पि-कारुभिः ॥ १२९ ॥

अवक्तृत्वं तथा स्त्रीभिः कृत्यमेतद्यतेः स्मृतम् ॥
न कदम्बकसंरोधो नित्यमेकान्तशीलता ॥ १३० ॥

सदैव प्राणसंरोधः सदैवाध्यात्मचिन्तनम् ॥
मृद्वेणुदार्वलाब्वश्ममयं पात्रं यतेः स्मृतम् ॥ १३१ ॥

---

१. A. and D. read आसमासं क्षयं गच्छेदनिला° for वासनासंक्षयं गच्छेद-निला.° २. A. reads उपरतिं for उपरामः. ३. Only A. reads समास्थाप्य for समास्थाय. ४. C. and E. read वनचर्या for व्रतचर्या.

शुद्धिरद्भिरमीषां तु गोवालैश्चावघर्षणम् ॥
न दण्डैर्न च दण्डेन विना वा तेन वा तथा ॥ १३२ ॥
मोक्षावाप्तिर्भवेत्पुंसां किंत्वस्याध्यात्मचिन्तनात् ॥
समत्वं सुख-दुःखेषु तथा विद्वेष-रागयोः ॥ १३३ ॥
आत्मान्ययोः समानत्वमजस्रं चात्मचिन्तनम् ॥ १३४ ॥
यतिभिस्त्रिभिरेकत्र द्वाभ्यां पञ्चभिरेव वा ॥
न स्थातव्यं कदाचित्स्युस्तिष्ठन्तो नाशमाप्नुयुः ॥ १३५ ॥
बहुत्वं यत्र भिक्षूणां वार्तास्तत्र विचित्रकाः ॥
स्नेह-पैशून्य-मात्सर्यं भिक्षूणां नृपतेरपि ॥ १३६ ॥
तस्मादेकान्तशीलेन भवितव्यं तपोर्थिना ॥
आत्माभ्यासरतेनैव ब्रह्मप्राप्त्यभिलाषुकः ॥ १३७ ॥
त्रिदण्डग्रहणादेव यतित्वं नैव जायते ॥
अध्यात्मयोगयुक्तस्य ब्रह्मावाप्तिर्भवेद्यतः ॥
जितेन्द्रियो हि दण्डार्हो युवा न स्यात्तथा सरुक् ॥ १३८ ॥
युवा नीरुक् तथा भिक्षुरात्मबुद्धिप्रदूषकः ॥
भिक्षुर्गेहे वसन्यत्र कामार्तोऽन्योऽभिगच्छति ॥ १३९ ॥
तत्संगमनार्थं वृक्षान्वै सह तेनैव पातयेत् ॥
एकरात्रं तु निवसेद्भिक्षुर्यस्य गृहाङ्गणे ॥ १४० ॥
तस्य वै तारयेत्पूर्वान् विंशतिं पितृमातृतः ॥
भिक्षुर्यस्यान्नभुक् ब्रह्मयोगाभ्यासरतो भवेत् ॥ १४१ ॥
परिणामश्च योगेन कृतकृत्यो गृही भवेत् ॥
निर्ममो निरहङ्कारः सर्वसहः प्रलब्धधीः ॥ १४२ ॥
ब्रह्मण्यात्मनि गोमायौ मुनौ म्लेच्छे च तुल्यदृक् ॥
चिह्नानि धात्रा कथितानि धत्ते वर्तेत यो वै विहितेन भिक्षुः ॥
योऽध्यात्मवेदी सततं जिताक्षः स ब्रह्मकाये गमनं करोति ॥ १४३ ॥
वनस्थ-भिक्षुधर्मान्वै यानुवाच पराशरः ॥
यथावदभिधायैतान् वक्ष्याम्याश्रमभेदकान् ॥ १४४ ॥

इति वानप्रस्थ-भिक्षुधर्माः ।

---

१. E. and F. read अवकर्षणम् for अवघर्षणम्. २. A. reads °रतेनैव for °रतश्चैव. ३. A. reads °स्तिमभीप्सता for °स्त्वभिकाङ्क्षुकः. ४. A. reads स त्यजति वृक्षान्वै for तस्य वै तारयेत्पूर्वान्. ५. B. reads वीणायां for गोमायौ.

अथातः सम्प्रवक्ष्यामि भेदमाश्रमसम्भवम् ॥
ब्रह्मचर्यादिकानां तु याथातथ्यं निबोधत ॥ १४५ ॥

चतुर्णामाश्रमाणां तु भेदो दृष्टो मनीषिभिः ॥
प्रत्येकशो वदाम्येनं श्रुणुध्वं द्विजसत्तमाः ॥ १४६ ॥

ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा ॥
एतद्भेदान् प्रवक्ष्यामि श्रुणुध्वं पापनाशनम् ॥ १४७ ॥

चतुर्धा ब्रह्मचारी स्याद्गायत्रो वैधसस्तथा ॥
प्राजापत्यो बृहश्चेति लक्षणानि पृथक् पृथक् ॥ १४८ ॥

अक्षारलवणाशी स्यात् गायत्र्यभ्यासतत्परः[1] ॥
वर्तते भिक्षया[2] नित्यं गायत्रोऽयं प्रकीर्तितः ॥ १४९ ॥

चतुर्धा द्वादशाब्दानि योऽधीयानश्चतुःश्रुतीः ॥
भिक्षया ब्रह्मचर्येण तिष्ठेत्[3] ब्राह्मः स उच्यते ॥ १५० ॥

गुरोर्वा गुरुपुत्रस्य तत्पत्न्या वापि सन्निधौ ॥
यो वसेदभ्यसन् ज्ञानं[4] ब्रह्मचारी स नैष्ठिकः ॥ १५१ ॥

ऋतुकालाभिगामी सन् परस्त्रीं पर्व वर्जयन् ॥
वेदानध्येति भिक्षाभुक् प्राजापत्योऽयमुच्यते ॥ १५२ ॥

गृहस्थस्तु चतुर्भेदो वार्ता-शालीनवृत्तिकौ[5] ॥
यायावरस्तथा वान्यो घोरसन्यासिकस्तथा ॥ १५३ ॥

कृषि-गोरक्ष-वाणिज्यैः कुर्वन् सर्वाः क्रिया द्विजः ॥
विहितैरात्मविद्यैश्च वार्तावृत्तिः स उच्यते ॥ १५४ ॥

ददात्यध्येति यजते याजयेन्न च पाठयेत् ॥
कुर्यात्कर्मा[6]प्रतिग्राही शालीनो ध्यानकृद्[7]द्विजः ॥ १५५ ॥

उक्तः सन् कारयेदन्यांक्रियां कुर्यात्प्रतिग्रहम्[8] ॥
पाठयेच्च तथात्मानं यायावरः स उच्यते ॥ १५६ ॥

तिष्ठेद्यश्च शिलोञ्छाभ्यामुद्धृताग्निश्च उच्यते ॥
आत्मविद्य क्रियाः कुर्यात् घोरसंन्यासिकः स्मृतः ॥ १५७ ॥

---

१. C. reads °सकृत परम् for °भ्यासतत्परः. २. C. reads क्षमया for भिक्षया. ३. C. reads तेव्वभ्यात्म्यं तदुच्यते, for तिष्ठेत् ब्राह्मः स उच्यते. ४. C. reads °शास्त्रसज्ञानं for °दभ्यसन् ज्ञानं. ५. C. reads मतः शालीन-तीव्रकौ for वार्ता-शालीनवृत्तिकौ. ६. C. reads कर्मा° for कर्मा.° ७. A. reads ऽध्यात्मकृद् for ध्यानकृत्. ८. C. reads प्रतिग्रहे for प्रतिग्रहम्.

वानप्रस्थश्चतुर्भेदो वैखानस उदुम्बरः ॥
वालखिल्यो वनेवासी तल्लक्षणमथोच्यते ॥ १५८ ॥

फलैर्मूलैरकृष्टाग्नैरग्निकर्म वने वसन् ॥
कुर्यात्पञ्चमहायज्ञान् स वैखानस आत्मवित् ॥ १५९ ॥

प्रातर्दृष्टदिगानीतैर्फलाकृष्टाशनेन्धनैः ॥
उदुम्बरो मतो ज्ञानी पञ्चयज्ञाग्निकर्मकृत् ॥ १६० ॥

चतुरो न्यासकृदग्निकार्यं कुर्वन्वने वसन् ॥
फलस्नेहैर्वनोत्थैश्च बहुभिःश्रुतिचोदितैः ॥ १६१ ॥

उद्धृत्य परिपूताग्निस्तथाऽयाचितवृत्तिकः ॥
फलैर्वन्यैर्वनोत्थैश्च फेनपः पञ्चयज्ञकृत् ॥ १६२ ॥

वनस्थो वालखिल्यो यो धत्ते वल्कलचीवरम् ॥
अग्निकार्यकृदात्मज्ञ ऊर्जान्ते संचितं त्यजन् ॥ १६३ ॥

चतुर्भेदः परिव्राट् स्यात् कुटीचक-बहूदकौ ॥
हंसाः परमहंसाश्च वक्ष्यन्ते ते पृथक् पृथक् ॥ १६४ ॥

पुत्रस्य भ्रातृपुत्रस्य भ्रातृ-दौहित्रयोरपि ॥
तदुपान्तकुटीस्थो यः स भैक्ष्यवृत्तिभुक् द्विजः ॥ १६५ ॥

प्रतिचर्याकृतःसोऽपि यो वासःपूतवारिपः ॥
तथा त्रिदण्डभृत् शान्त आत्मज्ञः स कुटीचकः ॥ १६६ ॥

ज्ञेयो बहूदको नाम यः पवित्रितपादुकः ॥
शिक्यासनोपवीतानि धातुकाषायवस्त्रभृत् ॥ १६७ ॥

साधुवृत्तिर्द्विजौकस्तु भिक्षाभुगात्मचिन्तकः ॥
बहूदकस्त्वयं ज्ञेयो यः परिव्राट् त्रिदण्डभृत् ॥ १६८ ॥

---

१. A. B. D. E. F. read फेनपो वा for वनेवासी. २. A. B. D. E. and F. read °दिष्टा° for °दृष्ट.° ३. C. reads, लब्धैः फलैर्वन्यफलैः. ४. C. reads परिभूताग्नि for परिपूताग्निः. ५. C. reads वैचित्तवृत्तिकः for ऽयाचितवृत्तिकः. ६. C. reads वसेत् for धत्ते. ७. C. reads this line thus:—

तदुपान्तः कुटीस्थो वा भैक्ष्यं वृत्तिभुक् द्विजः ।.

८. A. reads—

प्रतिचार्यकृतस्तेयी यो वस्त्रपूतवारिपः ।.

एकदण्डधरा हंसा शिखोपवीतधारिणः ॥
वार्याधारकराः शान्ता भूतानामभयङ्कराः ॥ १६९ ॥
वसन्त्येकक्षपां ग्रामे नगरे पञ्चशर्वरीः ॥
कर्षयन्तो व्रतैर्देहमात्मज्ञानरताः सदा ॥ १७० ॥
एकदण्डधरा मुण्डा कन्था-कौपीनवाससः ॥
अव्यक्तलिङ्गिनोऽव्यक्ता सर्वदैव च मौनिनः ॥ १७१ ॥
शिखादिरहिताः शान्ता उन्मत्तवेषधारिणः ॥
भग्न-शून्यामरौकःसु वासिनो ब्रह्मचिन्तकाः ॥ १७२ ॥
एते परमहंसा वै नैष्ठिका ब्रह्मभिक्षवः ॥
उक्तास्तद्व्रतभेदश्चैरात्मनः प्रार्थनाकराः ॥ १७३ ॥

यो ब्रह्मचर्यव्रतचारिभेदो भेदो गृहस्थस्य तथैव यश्च ॥
योऽरण्यवासिद्विजकर्मभेदो यतेस्तथा नैष्ठिकमुक्तिभेदाः ॥ १७४ ।

चतुर्णामाश्रमाणां तु भेदमुक्त्वा पराशरः ॥
अथाब्रवीत् द्विजा योगं श्रुणुध्वं पापनाशनम् ॥ १७५ ॥
मुमुक्षवो विरज्यन्ते देहाद्गेहाद्दितो यथा ॥
शरीरज्ञास्तथा प्राहुः परब्रह्मलयंगमाः ॥ १ ॥
ख-वाय्वग्न्यंबु-धात्रीभिरारब्धमाशुनाशि च ॥
तन्मुख्यगुणसंयुक्तं तत्पञ्चाक्षालयं त्यजेत् ॥ २ ॥
शुक्र-शोणितसंयोगात्स्त्रीकोष्ठपाकसम्भवम् ॥
दुःखेन दशभिर्मासैर्व्यायतं भूरिदोहदैः ॥ ३ ॥
जनन्या दौहदाभावे गर्भस्थस्यापि दुःखिताः ॥
अत्यन्तं जायमानस्य योनियन्त्रनिपीडनात् ॥ ४ ॥

---

१. A. reads वार्याधानकराः; while C. and E. read वार्याचारकराः for वार्याधारकराः. २. A. B. C. read अभयप्रदाः for अभयङ्कराः. ३. C. reads सर्वशः for °शर्वरीः. ४. C. मर्षयन्तो for कर्षयन्तो. ५. C. reads अत्यन्त° for अव्यक्त.° ६. C. reads प्रार्थनापराः for प्रार्थनाकराः. ७. C. reads this whole line thus:--

हिरण्यवासो द्विजकर्मभेदो ह्युक्तो मयासीद्द्विजभिक्षुभेदः ॥.

८. B. C. D. E. F. read देहाद्दितो for गेहाद्दितो. ९. B. and E. read °पाप° for °पाक°. १०. C. reads व्यापितं; while A. and E. read व्यायितं for व्यायतं. ११. B. reads जनन्या दौर्हृदभावे; while C. reads जनन्यादौ गृहाभावे for जनन्या दोहदाभावे.

जातस्य बालरोगाद्यैर्योगिनीग्रहदोषतः ॥
देहिनः सर्वदा दुःखं दंतजन्मादिकैर्ग्रहैः ॥ ५ ॥
एवं बाल्ये महद्दुःखं कौमार्ये यौवनेऽपि च ॥
स्त्रिया विनापि सार्धं वा दारिद्र्यैश्वर्ययोरपि ॥ ६ ॥
क्षुत्तृड्भ्यां प्रथमे न्स्तरक्षणाद्यैर्द्वितीयके ॥
वृद्धत्वे चानयोर्दुःखं तस्माद्दुःखमयं वपुः ॥ ८ ॥
मांसेन लेपितं बद्धं स्नायुभिः कुल्यसञ्चयम् ॥
मेदोमेहनसम्पूर्णं कफ-पित्त-वसाश्रयम् ॥ ९ ॥
अमेध्यपूर्णं भस्त्रावत्सर्वं वै सर्वदाशुचि ॥
मृत्स्नया स्नान गन्धाद्यैर्निर्गन्धि क्रियते बहिः ॥ १० ॥
दुर्गन्धं सर्वरन्ध्रेषु स्वघ्राणोद्वेगकारकम् ॥
सततं स्रवतेऽमेध्यं किं देहस्योच्यते शुभम् ॥ ११ ॥
यद्दग्धं भवेन्मृत्स्ना दग्धं भस्मत्वमाप्नुयात् ॥
मृतस्य दृश्यते किञ्चित् तृष्णाकोपरतस्य तु ॥ १२ ॥
क इहोत्पद्यते विद्वान् को वेह म्रियते पुनः ॥
यन्त्रोपममिदं धीमान् वायुत्यक्तं मृतं भवेत् ॥ १३ ॥
पृथगात्मा पृथक् स्वान्तं पृथक् खानि दशापि च ॥
पृथक् पृथक् च भूतानि पृथक् तेषां गुणोत्करः ॥ १४ ॥
पृथक् प्राणादिवायुश्च तद्वृत्तिश्च पृथक् पृथक् ॥
पृथक् पृथगिति ह्येतत् शरीरं किमिहोच्यते ॥ १५ ॥
आरम्भकाणि यान्येव तेषु यान्ति तदंशकाः ॥
आत्मा चान्यद्वाप्नोति यातनीयं पुनर्वपुः ॥ १६ ॥

---

१. B. and E. read हत° for दन्त°; while C. reads पूजा° for दन्त°
२. A. reads कामात्तयौवने and B. मन्मथायौवने for कौमार्ये यौवने
३. A. B. E. read बालं for बद्धं. ४. B. reads मीढ° for मेदो°
५. B. and E. read अमेध्यपूर्णभस्त्रावत् and अमेध्यपूर्णे वस्त्रावत् respectively; while C. reads अमेध्यपूर्णसस्रावं for अमेध्यपूर्णं भस्त्रावत्. ६. B. and E. read तृष्णायाः and C. reads तृप्सायाः. ७. C. D. read °कोपरि तस्य च for °कोपरतस्य तु. ८. Only C. reads दशानि for दशापि. ९. B. reads गुणोत्तरः for गुणोत्करः. १०. C. reads.

अन्यद्वाप्यवाप्नोति याति वीर्यं पुनर्वपुः ।;

while B. E. read पावनीयं for यातनीयं.

यः पश्येत् शृणुयाज्जिघ्रेत् स्वदेद्भियात्स्मरेद्वदेत् ॥
स्वप्याद्य जागृयाद्गच्छेद्भिन्द्यात् गायेत् जपेत् पठेत् ॥ १७ ॥
गृह्णीयादर्पयेद्द्याज्जायेत जनयेदपि ॥
सोऽस्ति कश्चित्परो देहाद्यो देहीति निगद्यते ॥ १८ ॥
नैकश्चेत्स्यान्न देहेऽस्मिन् प्रत्यभिज्ञा कथं भवेत ॥
एकदृक्-दृष्टिरूपस्य पुनरन्येन पश्यतः ॥ १९ ॥
अद्राक्षं यदहं वस्तु तदेवैतत्स्पृशाम्यथ ॥
यथाऽस्प्राक्षं च पश्यामि प्रतीतिर्यस्य जायते ॥ २० ॥
दर्शन-स्पर्शनाभ्यां च ग्रहणादेकवस्तुनः ॥
अस्ति ह्यात्मा परो देहात्तथा देहास्ति कश्चन ॥ २१ ॥
गृहीं च गृहमध्यस्थो भग्नं किंचित्समाचरेत् ॥
देहे क्षतादिसंरोहात्तथा देहास्ति कश्चन ॥ २२ ॥
ज्ञानयोगफलेनायं कर्मयोगफलेन च ॥
स एव भुज्यते कुर्वन् उद्देशो तस्य तार्यते ॥ २३ ॥
तार्यते कर्मणा चायं बध्यते कर्मणापि च ॥
उभयथापि नैवार्थं प्रत्यक्षं दृश्यते द्विजाः ॥ २४ ॥
मायावित्वं च मूकत्वमतिरिक्तांगता क्रमात् ॥
अवाक्त्वं धान्यहर्तॄणां पैशून्ये पूतिनासिता ॥ २५ ॥
भरतो वर्णकैश्चित्रैः स्वदेहं चित्रयेद्यथा ॥
कुर्वन्नानाविधं कर्म तथात्मा कर्मजास्तनूः ॥ २६ ॥

---

१. C. reads मांतस्य शृणुयात्पाद स्पर्शे जिघ्रेत्स्वादेद्वदेत्. २. C. reads भयात्, and यतेत वा, respectively for भिन्द्यात् and जपेत् पठेत्. ३. A. reads यस्तथा for अर्पयेत्; while C. reads this line thus—

गृण्हीयाद्यथाऽन्यस्य जायेत स नयेदपि ।.

४. D. reads नवे देहे for न देहेऽस्मिन्. ५. E. F. read दृष्टरूपस्य for दृष्टिरूपस्य. B. D. also read the same. ६. E. reads अद्राक्यं for अद्राक्षं. ७. B. and E. read सुशाम्यथ for स्पृशाम्यथ. ८. B. E. both read यथापक्षं for यथाऽस्प्राक्षं. ९. A. reads युज्यते for भुज्यते. B. D. E. F. also read as A., but C. reads पुज्यते for युज्यते. १०. Only A. reads निर्देशो for उद्देशो. ११. C. reads वार्यते for तार्यते; while D. reads तीर्यते for तार्यते. १२. B. C. both read बाध्यते for बध्यते. १३. A. reads अर्त्रं for अत्र. १४. B. reads तथा कर्मप्रजास्तनूः for तथात्मा कर्मजास्तनूः; while C. reads तथात्मा कर्मजस्ततनुम्.

जरायुजाण्डजादीनि वपूंषि योऽग्रहोत्रिजैः ॥
कर्मभिर्वर्णभेदैश्च चित्तदेगित्यरुग्युतः ॥ २७ ॥
बधिर-क्लीब-निःस्वा-ऽन्धा जायन्ते पुरुषाधमाः ॥
निरेनसः पुनर्भूत्वा विद्वद्विप्रकुलेषु च ॥ २८ ॥
महाकुलेषु चान्येषु जायन्ते लक्षणान्विताः ॥
धनवन्तः प्रजावन्तो विद्यावन्तो यशस्विनः ॥ २९ ॥
रूप-सौभाग्यसंयुक्ताः सर्वेषामुपकारकाः ॥
ब्रह्माभ्यासरताः शान्ताः षट्कर्मनिरतास्तथा ॥ ३० ॥
पञ्चयज्ञकृतो नित्यमग्निष्टोमादिषु स्थिताः ॥
द्विजोपास्तिकरा नित्यं गुर्वाचार्यादिपूजकाः ॥ ३१ ॥
चतुराश्रमधर्माणां सेविनः समदर्शिनः ॥
गुणैः सर्वैः समायुक्तास्तेजस्विनो जनप्रियाः ॥ ३२ ॥
एवंभूताश्च ये विप्रास्तेषां विष्णुः सदान्तिके ॥
विष्णुश्च सर्वदैवत्यस्तस्माद्विष्णुमना भवेत् ॥ ३३ ॥
देवतार्चाकृतां नित्यं गुरूपास्तिकृतां तथा ॥
ब्रह्मैवाभ्यसतां सम्यक् ब्रह्मसान्निध्यमिष्यते ॥ ३४ ॥
उपास्य तत्सदा ब्रह्म यावत्साधकतां वहेत् ॥
बह्वाभ्यासाद्विदित्वा यत्संसरेन्नेह मानवः ॥ ३५ ॥
वदन्ति ब्रह्मवेत्तारो ब्रह्माभ्यासमनेकशः ॥
ब्रह्मापि द्विविधं धीमन्नपरं परमेव च ॥ ३६ ॥
समत्वं परमं ब्रह्म शब्दब्रह्मेति कीर्तितम् ॥
प्रणवाख्यं त्रिरूपं तत्प्रागेव हि विशेषतः ॥ ३७ ॥

---

१. Only C. reads चित्र° for चित्त.° २. B. reads नीरेतसः for निरेनसः. E. D. also the same; while C. निरतः स पुनर्भूत्वा. ३. A. D. C. E. read वेदवन्तो for विद्यावन्तो. ४. A. C. D. read नयनप्रियाः for उपकारकाः. ५. B. E. and F. read °वर्णानां for °धर्माणां. ६. C. reads कथिताः for सेविनः. ७. A. C. D. read द्विजप्रियाः or जनप्रियाः. ८. C. reads विष्णुमयो for विष्णुमनाः. ९. C. reads आचामतां for अभ्यसतां. १०. A. reads बहूपायात्, and C. reads बहुपापात्. D. and F. read as A.; ११. B. reads संस्मरन् for संसरेत्. १२. B. C. read वेदेशे for °वेत्तारो. १३. D. reads °न्यास° for °भ्यास°. १४. C. reads समात्वं for समत्वं. १५. B. C. E. and F. read विरूपं for त्रिरूपं. १६. B. D. E. F. read प्रागेव for प्रायेव.

प्राणायामैस्तदभ्यस्य पूरकाद्यैश्च वायुभिः ॥
पूरक-कुम्भकौ वायू रेचकस्तु तृतीयकः[1] ॥ ३८ ॥
येन व्यावर्तते वायुर्नासाग्रान्निःसरेद्वहिः ॥
पूरयेत् श्वासयोगेन पूरकं तद्विदो विदुः[2] ॥ ३९ ॥
आपूर्य निश्चलीकृत्य यःकश्चिद्धार्यते निलः ॥
श्वासयोगं वदन्त्येनं कवयः कुम्भकं त्विति ॥
ब्रह्मध्यानसमायुक्तं वायुं यो न बहिर्नयेत् ॥ ४० ॥
कुम्भकः पवनः स स्याद्यो बहिर्नैव मुच्यते ॥
रेचकं तद्विदुस्तज्ज्ञा रेच्यते यः शनैः शनैः ॥ ४१ ॥
न वेगाद्रेचयेद्वायुं सर्वथा विघ्नभाग् भवेत्[3] ॥
मोचयेन्मन्दमन्दं तु बहिः स्यात्कुम्भितो यथा ॥ ४२ ॥
नासाग्रस्थितपाणिस्तु सशिरश्चालनक्षमम्[4] ॥
अनिलं रेचयेद्योगी न मन्दं नातिवेगतः ॥ ४३ ॥
न ज्ञायतेऽनिलो यस्य निःसरन् नासिकाग्रतः ॥
यस्यास्ते कुम्भितोऽजस्रं प्राणयोगी[5] स उच्यते ॥ ४४ ॥
दीर्घायुस्त्वं परं ज्ञानं[6] समस्ता योगसिद्धयः ॥
देहे तस्याऽवतिष्ठन्ति प्राणो येन[7] वशीकृतः ॥ ४५ ॥
यत्र तिष्ठति जीवःस्यान्निःसृतेमृत उच्यते ॥
स किन्न धार्यते प्राणो ब्रम्हास्ति[8] सति यत्र तु ॥ ४६ ॥
प्राण एवायमात्मास्ते प्राणो देहस्य वाहकः ॥
शरीरान्निःसृते प्राणे नात्मा विग्रहवाहकः[9] ॥ ४७ ॥
देहं त्यक्त्वा यदा जीवो बहिराकाशमास्थितः ॥
तदा निर्विषयो वायुर्भवेदत्र न संशयः ॥ ४८ ॥

---

१. C. reads द्वितीयकः for तृतीयकः. २. A. reads:—

श्वासयोगेन तं प्राहुः पूरकं तद्विदोऽनिलम् ।.

३. B. reads निर्गतो भयात् for विघ्नभाग्भवेत्; D. E. and F. also read as B.; ४. A. reads स स्मीषश्चानलक्षमम्, B. स्वच्छयेश्चानलक्षमम्, C. सशिखं चालनक्षयम्, D. सशिखश्चालनं क्षमम् and E. सस्कोषिच्चलनक्षमम् all for स शिरश्चालनक्षमम्. ५. B. and E. read प्राणयागी for प्राणयोगी. ६. Only A. reads ज्ञत्यं for ज्ञानं. ७. C. reads प्राणायाम° for प्राणो येन. ८. F. reads प्राणान् ब्रम्हा तिष्ठति यत्र तु for प्राणो ब्रम्हास्ति: स हि यत्र तु. ९. B. D. E. read निग्रह° for विग्रह°.

तदा स सर्वदेहेषु नासाग्रमास्थितः शिवः ॥
प्रत्यक्षः सर्वभूतानां तिष्ठते न च लक्ष्यते ॥ ४९ ॥

यदा न श्वसते वायुस्तदा निष्फलमुच्यते ॥
नाभिसंस्थं तु विज्ञाय जन्मबन्धाद्विमुच्यते ॥ ५० ॥

देहस्थः सर्वसत्वानां स जीवति शृणोति च ॥
धर्माधर्मैरवष्टब्धो देहे देहे व्यवस्थितः ॥ ५१ ॥

स हृत्पंकजसंस्थस्तु अध ऊर्ध्वं प्रधावति ॥
धर्माधर्ममहापाशैर्गृहीतःसन् प्रवर्तते ॥ ५२ ॥

ऊर्ध्वमुच्छ्वसते यावत्प्राणाख्यस्तु समीरणः ॥
तावत्प्राणस्तु विज्ञेयो यावन्नासाग्रमास्थितः ॥ ५३ ॥

अत्रस्थं निष्कलं ब्रह्म यावन्न श्वसिति द्विज ॥
श्वासेन हि समायोगादाकाशात्पुनरागतः ॥ ५५ ॥

नासारन्ध्रसमालीनस्तदा निष्फलमुच्यते ॥
स जीव इति विख्यातः स विष्णुः स महेश्वरः ॥ ५६ ॥

ध्यातव्या देवतास्तत्र क्रमेण पूरकादिषु ॥
विष्णु-ब्रह्मेश्वरास्तेषु स्थानेषु स्थानविद्विजैः ॥ ५७ ॥

नीलपङ्कजवत् श्याममासीनं नाभिमध्यतः ॥
महात्मानं चतुर्बाहुं पूरके तु हरिं स्मरेत् ॥ ५८ ॥

हृत्पद्मे कुम्भके ध्यायेत् ब्रह्माणं पङ्कजासनम् ॥
रक्तेन्दीवरवर्णाभं चतुर्वक्त्रं पितामहम् ॥ ५९ ॥

रेचके शङ्करं ध्यायेल्ललाटस्थं त्रिशूलिनम् ॥
शुद्धस्फटिकसङ्काशं संसारार्णवतारकम् ॥ ६० ॥

एवं श्वसनसंरोधाद्देवतात्रयचिन्तनात् ॥
अग्नि-वाय्वंभसंयोगादन्तरं शुध्यते त्रिभिः ॥ ६१ ॥

---

१. A. reads नि.कलम् for निष्कलम्. F. also reads as A.; २. B. and E. read महापाशैर्गृहीतःसन्प्रवर्तते for °रवष्टब्धो देहेदेहे व्यवस्थितः. ३. B. E. read सकृत्पंकज° for स हृत्पंकज.° ४. B. reads निष्फलं for निष्कलं. ५. Only B. and E. read स जीवति इति ख्यातः for स जीव इति विख्यातः. ६. A. reads ध्यानकृत्° for स्थानवित्° and B. ध्यानेषु विधिवत् for स्थानेषु स्थानवित्°; while C. reads स्थावरा for स्थानवित्°. E. reads the same as B.

निरोधाद्भवद्वायुस्तस्मादग्निस्ततो जलम् ॥
इति त्रिदेवतायोगात् शुद्ध्यतेऽन्तः पुनर्द्विजाः ॥ ६२ ॥

व्याहृतिप्रणवोपेताः प्राणायामास्तु षोडश ॥
अपि भ्रूणहणं मासात्पुनन्त्यहरहः कृताः ॥ ६३ ॥

प्रातरह्नि च सायं च पूरकं ब्रह्मणोऽन्तिकम् ॥
रेचकेन तृतीयेन प्राप्नुयात्परमं पदम् ॥ ६४ ॥

न प्राणेनाप्यपानेन वायुं वेगेन रेचयेत् ॥
प्रागुक्तेन प्रयोगेण मोचयेत्प्राणसंयमी ॥ ६५ ॥

शरीरं च शिरोग्रीवा विद्वान् पाणी च पद्भ्यम् ॥
सर्वाङ्गं निश्चलं धार्यमापूर्यसर्वनाडिकाः ॥ ६६ ॥

संवृत्याङ्गानि सर्वाणि कूर्मवद्ध्यानकृद्द्विजः ॥
बद्धासनोऽचलाङ्गस्तु कुर्याद्सुनिरोधनम् ॥ ६७ ॥

कृत्वा सुसंयमं विद्वान्विधिवत्समुपस्पृशेत् ॥
अन्तरं शुध्यते यस्मात्तस्मादाचमनं स्मृतम् ॥ ६८ ॥

इत्युक्तः प्राणसंरोधो देवतात्रयसंयुतः ॥
त्रिमात्रः प्रणवस्तत्र ध्यातव्यः सर्वयोगिभिः ॥ ६९ ॥

स्मर्यमाणस्य यातस्य विश्रान्तिःस्याद्मातृके ॥
तत्परं निष्कलं ज्ञानं तद्विदुर्ब्रह्मचिन्तकाः ॥ ७० ॥

मृदुमध्यान्तसत्वाच्च स्थूलसूक्ष्मानुभावतः ॥
त्रिविधं प्राणसंरोधं विदुस्तत्त्ववेदिनः ॥ ७१ ॥

क्रियमाणो विशेषेण प्रत्याहारोऽयमुच्यते ॥
सर्वं प्रागुक्तमेवास्य विशेषं तु निबोधत ॥ ७२ ॥

---

१. C. reads भवन्ति for व्याहृति°. २. A. B. D. E. and F. read अहश्च for अन्हि च. ३. B. reads उज्वलाङ्गः for अचलाङ्गः. E. also reads the same. ४. C. reads सुसंचयं for सुसंयमं and विधित्सुः for विधिवत् respectively. ५. A. reads अमात्रिके for अमातृके. ६. C. and D. read निष्फलं for निष्कलं. ७. B. D. E. and F. read—

मृदुमध्यस्थसत्वाच्च स्थूललक्ष्यानुभावतः ।;

while C. reads °मध्योत्तमत्वाच्च for मध्यान्तसत्वाच्च.

बाह्यं वायुं यथोत्थाप्य आकृष्य यच्छनैः शनैः ॥
निरुन्ध्याद्विधिवद्योगी प्रत्याहारः स उच्यते ॥ ७३ ॥

व्याहृत्याऽभिमुखीकृत्य खानि यत्र निरुध्य च ॥
चिन्तयेन्निश्चलीकृत्य प्रत्याहारः स उच्यते ॥ ७४ ॥

प्राणाद्या वायवः स्थूलाः सङ्कल्पाद्यास्तथाऽणवः ॥
निरोद्धव्या दशाप्येते प्राणसंयमकारिभिः ॥ ७५ ॥

वायुरेकोऽपि देहस्थः क्रियाभेदेन भिद्यते ॥
प्रकर्षेणासमन्ताच्च नयनादिक्रियाः स्मृताः ॥ ७६ ॥

भविष्या-ऽतीतकालेभ्यः कर्मभ्यश्चाशुसंयमी ॥
सर्वानिलांस्तथा खानि निरुध्यैकत्र धारयेत् ॥
स धीमान्वेदविद्विद्वान् स योगी ब्रह्मवित्तमः ॥ ७७ ॥

स्थानं द्विजन्मा विधिवत्त्वजस्रमभ्यस्य संयाति विधेःपरस्य ॥
पराशरोक्तैर्बहुभिःप्रकारैरुक्तो विधिः प्राणनिरोधनस्य ॥ ७८ ॥

प्रत्याहारो विशेषस्तु प्रोक्तस्तस्यैव वित्तमाः ॥
यदभ्यस्याप्नुयाद्ब्रह्म सर्वदानंदमव्ययम् ॥ ८० ॥

एतैस्तु पुनरावृत्तिः कदाचिदिह दृश्यते ॥
संसृतिं नाप्नुयाद्येन शक्तिसूनुस्तदब्रवीत् ॥ ८१ ॥

उक्तस्तु संयमः पूर्वं त्रिविधो मलनाशनः ॥
निबोधत चतुर्थं तु ध्यानं प्रणववेधसः ॥ ८२ ॥

विधिवत्प्रणवध्यानमेकचित्तस्तु योऽभ्यसेत् ॥
ब्रह्माभ्येति स मुक्तात्मा स योगी योगिनां वरः ॥ ८३ ॥

---

१. A. reads यथोत्साहं for यथोत्थाप्य. B. E. and F. also read the same. २. Only F. reads व्याहृत्यभिमुखोऽन्यत्र for व्याहृत्याऽभिमुखीकृत्य ३. Only C. reads प्राणाद्यवयवाः for प्राणाद्या वायवः. ४. C. reads सुवायवः for तथाऽणवः. ५. A. reads दशास्वेते and D. तथाप्येते for दशाप्येते; while C. reads दृशोऽप्येते. ६. C. reads न यानादि° for नयनादि°. ७. B. and E. read अनुसंयमी and F. reads आत्मसंयमी for शुसंयमी; while C. reads अस्तु संयमी. ८. B. E. read नितान्तं for अजस्रं. ९. B. reads संस्मृतं, and C. संस्मृतिं for संसृतिं. १०. Only C. reads विधिहीनो हि नाशनः for त्रिविधो मलनाशनः.

